आई.एस.एस. एन :२४५४-२८८१




# स्नीथिका

अन्ताराष्ट्रिय-बहुसांकायिक-बहुभाषिक-वार्षिक-शोधपत्रिका

(पुनरीक्षिता)

संख्या -२०२२

मुख्यसम्पादकः -

डॉ॰ रातुलबुजरबरुवा

सम्पादकौ -

डॉ॰ कमललोचनआत्रेयः

डॉ॰ देवब्रतबाडइ

प्रकाशकः -

संस्कृतसाहित्यविभागः

कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः

नलबारी, असमप्रदेशः

ISSN : 2454-2881

# द्वीथिका

अन्तारास्ट्रिय-बहुसांकायिक-बहुभाषिक-वार्षिक-शोधपत्रिका
( पुनरीक्षिता )

संख्या- २०२२

मुख्यसम्पादकः
ड॰ रातुलबुजरबरुवा

सम्पादकौ
ड॰ कमललोचनआत्रेयः
ड॰ देवव्रतबाडइ

प्रकाशकः
संस्कृतसाहित्यविभागः
कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः
नलबारी, असमप्रदेशः

# सम्पादनसमितिः

## मुख्योपदेष्टा

आचार्य प्रह्लाद रा. जोशी
कुलपतिः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः

## उपदेष्टारः

प्रो. भागीरथिनन्दः, आचार्यः, साहित्यविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली
प्रो. भागीरथी विश्वासः, आचार्या, संस्कृतविभागः, असमविश्वविद्यालयः, शिलचरः
प्रो. मदनचन्द्रबोरो, कुलसचिवः (प्रभारी), कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः
ड॰ रणजीतकुमारतिवारी, परीक्षानियन्त्रकः (प्रभारी), कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः
ड॰ निवेदिता गोस्वामी, अध्यक्षा, संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः

## मुख्यसम्पादकः

ड॰ रातुलबुजरबरुवा
सहाचार्यः, संस्कृतसाहित्यविभागः

## सम्पादकौ

ड॰ कमललोचनआत्रेयः
सहायकाचार्यः, संस्कृतसाहित्यविभागः

ड॰ देवव्रतबाडइ
सहायकाचार्यः, संस्कृतसाहित्यविभागः

## सदस्याः

ड॰ नुरिमा इयाच्मिन
सहायकाचार्या, संस्कृतसाहित्यविभागः

ड॰ छविलाल उपाध्यायः
अतिथि-अध्यापकः
संस्कृतसाहित्यविभागः

कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः

# पुनरीक्षकसमितिः

१. **प्रो. शान्ति पोखरेल,** विभागाध्यक्षचरः, संस्कृतविभागः, असमविश्वविद्यालयः, शिलचरः
२. **ड॰ रुणिमा शर्मा**, विभागाध्यक्षा, संस्कृतविभागः, भट्टदेवविश्वविद्यालयः, पाठशाला, असमः
३. **ड॰ निवेदिता गोस्वामी**, अध्यक्षा, संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः
४. **ड॰ अलका दास**, अध्यक्षा, शिक्षाविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः
५. **ड॰नारायणप्रसादभट्टराई,** सहायकाचार्यः, वेदविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी

प्रकाशवर्षम् - २०२२

मूल्यम् - १००० ( एकसहस्ररूप्यकाणि ) मात्रम्

आवरणपृष्ठा-
बनजितराभा

मूद्रितम् - निउडिजिटालकम्प्युटार, नलबारी, असमः

प्रज्ञापितम्-
लेखेषु यन्मतानि प्रकाशितानि तानि लेखकानामेव, न तु सम्पादनसमित्याः।

प्रकाशकः - संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः, नलबारी, असमप्रदेशः

ISSN : 2454-2881

# SNĪTHIKĀ

An International
Multi-Disciplinary and Multi-Lingual Annual
Research Journal
(Peer-reviewed)

**2022**



Published by:
**Department of Sanskrit Sahitya**
Kumar Bhaskar Varma Sanskrit and Ancient Studies University,
Nalbari, Assam




# कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः

কুমাৰ ভাস্কৰ বৰ্মা সংস্কৃত আৰু পুৰাতন অধ্যয়ন বিশ্ববিদ্যালয়

Kumar Bhaskar Varma Sanskrit & Ancient Studies University

Namati, Nalbari-781337

Website:www.kbvsasun.ac.in :: Email Id:registrarkbvasasu@gmail.com

आचार्य प्रह्लाद रा. जोशी
कुलपतिः
Prof. Pralhad R. Joshi
Vice Chancellor




***जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।***

***यस्यास्यकमलाद्गलितं वाङ्मयममृतं जगत् पिबति ॥***

अस्माकं विश्वविद्यालयस्य संस्कृतसाहित्यविभागेन प्रकाश्यमाना एषा स्नीथिकानामिका शोधपत्रिका भवतां पुरस्तात् उपस्थापयितुं मोमुद्यते मे मनः । अस्यां हि सन्ति बहवः शोधलेखाः, ये च विद्वद्भिः महता परिश्रमेण लिखिताः सन्ति ।

पाठकाः तेषां लाभं स्वीकर्तुम् अर्हन्ति । एते लेखाः सार्वकालिकाः । एतेषां महत्त्वं न केवलं अद्य अपितु कालान्तरे अपि भविता । ये शोधछात्राः सन्ति ते तु नितराम् उपकृताः भवन्ति, यतः शोधकार्ये बहूनां शोधपत्रिकाणाम् अध्ययनं करणीयं भवति , तस्मिन् समये एषा शोधपत्रिका बहूपकरोति ।

संस्कृतक्षेत्रे शोधकार्यम् आबहोः कालात् प्रवर्तते एव, एषा परम्परा अस्माभिरनुवर्तनीया, विशेषतः एषु दिनेषु भारतीयज्ञानपरम्परायाः विषये बहुत्र शोधकार्यम् आरब्धम् अस्ति, अग्रिमवर्षे अस्माभिः पत्रिकैषा 'भारतीयज्ञानपरम्पराविषेशाङ्कः' इति प्रकाशयितुं शक्यते ।

अन्ते अस्याः शोधपत्रिकायाः प्रकाशने अहर्निशं कार्यं कृतमस्ति, साहित्यविभागस्य वरिष्ठ-अध्यापकः डॉ. रातुल बुजर बरुवा, एवं साहित्य विभागस्य एव युवविद्वान् डॉ. कमललोचन आत्रेय महोदयः, तयोः द्वयोः कृते विशेषाभिनन्दनानि, अपि च साहित्य विभागस्य अध्यक्षायै डॉ, निवेदिता गोस्वामी महोदयायै, देवव्रत, नुरिमा, एवं छबिलाल इत्येतेषां कृते अभिनन्दनम् । शोधपत्रिकायाः प्रकाशने कारणीभूतेभ्यः सर्वेभ्यः हार्दान् धन्यवादान् वितनोमि।

प्राजोशी

(आचार्य प्रह्लाद रा. जोशी)

कुलपतिः

# सम्पादकीयम्

कुन्तकेन काव्यस्य प्रयोजनालोचनावसरे आह्लाद्यामृतवत् काव्यम् अज्ञानरूपरोगस्य विनाशकरमिति स्वीकृतम् -

कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।
आह्लाद्यामृतवत्काव्यमविवेकगदापहम् ।।

– वक्रोक्तिजीवितम् , १.७

कुन्तकस्याशयः यत्काव्येन आनन्दानुभूतिरूपचमत्कारः समुपजायते। लेखकानां प्रज्ञायुक्ता वाणी सहृदयान् विशेषेण चमत्कुर्वन् अलौकिकमेवानन्दं जनयति ज्ञानप्रदायका च भवति । कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयस्य संस्कृतसाहित्यविभागस्य "स्नीथिका" इति गवेषणापत्रिका प्रकाशस्यान्तराले तथोद्देश्यमेव वर्तते । कुमारभास्करवर्मसंस्कृतपुरातनाध्ययनविश्वविद्यालयस्य संस्कृतसाहित्यविभागेन आचार्याणां शोधच्छात्राणां विदुषाञ्च प्राचीनभारतीयज्ञानपरम्पराविषयकान् शोधलेखान् संगृह्य स्नीथिका इत्याख्या बहुभाषिकी गवेषणापत्रिका प्रकाश्यते। यैः विद्वद्भिः स्नीथिकायाः शोधलेखाः सुसमीक्षिताः, येषां आचार्याणां गवेषकाणाञ्च लैखैरियं संख्या पूरिताः, तेभ्यः सर्वेभ्यः कार्तज्ञ्यं विनिवेद्यते। पत्रिकायाः विभिन्नदिक्षु विश्वविद्यालयस्य परमादरणीयकुलपतिमहाभागानां परामर्श अस्माभिः प्राप्तः। अतः कुलपतिमहाभागान् प्रति कार्तज्ञ्यं विज्ञापयामि। विभागस्य शोधच्छात्रौ नीता देवी रबीन सरकारश्च अस्मदपक्षतः कृतज्ञतार्हौ। निउ डिजिटेल कम्पिउटर, नलबारी इत्यस्य सत्वाधिकारिणे कर्मचारिभ्यश्चापि साधुवादा विज्ञाप्यन्ते। अन्तेऽस्माकमनवधानवशादत्रावशिष्टाः सर्वेऽपि दोषाः विद्वज्जनैर्मार्जनीया इति निवेदनपुरस्सरं पत्रिकेयं विदुषां करकमलेषु समर्प्यते।

ॐ शं नो मित्रः शं वरुणः शं नो भवत्वर्जमा।
शं न इन्द्रो बृहस्पति शं नो विष्णुरुरुक्रमः।।

ड° रातुलबुजरबरुवा
मुख्यसम्पादकः
ड° कमललोचन आत्रेयः
ड° देवब्रत बाडइ
सम्पादकौ, स्नीथिका

ISSN : 2454-2881

# सूचीपत्रम्



ISSN : 2454-2881

ISSN : 2454-2881

# ड॰ विश्वनारायणशास्त्रिण अविनाश्यामैतिहासिकसामाजिकसांस्कृतिकदिशः समीक्षणमेकम्

ड॰ रुणिमा शर्मा*

**प्रारम्भणम् –**

असमजनन्याः सुतनयः ड॰ विश्वनारायणशास्त्री बहुप्रतिभासमलंकृतः संस्कृतवाङ्मयस्य वरेण्यः पण्डितः। पण्डितप्रवरानन्दरामबरुवायाः प्राच्यविद्यार्णवकृष्णकान्तसन्दिकैपादस्य च यथार्थत एवानुगामिनाऽनेन ड॰ शास्त्रिणा न केवलं संस्कृतजलधितः प्रकृष्टः रत्नराशिः समुद्धृत अपि तु राजनीत्यां सामाजिकक्षेत्रष्वपि स्वकीयप्रतिभया सुकीर्त्या सम्मानीयं स्थानमधिकृतम्। ड॰ शास्त्रिणः सृष्टिराशेः चतुर्धा दिशः समवलोक्यन्ते – पाठ्यग्रन्थाः, सम्पादितग्रन्थाः, अनुदितग्रन्थाः, मौलिकग्रन्थाश्च।

अनुदितसम्पादितग्रन्थेषु The Kalika Puranam 'कालिकापुराणे मूर्तिविनिदेशः', विश्वनाथकविराजस्य 'साहित्यदर्पण' इत्यास्यासमीयानुवादः समुल्लेखनीयः। तथैव Sanskrit studies in Assam through the Ages, Samavaya Foundation of Nyayavais esikas इत्याद्यः ग्रन्थाः शास्त्रिणः कीर्तिप्रदाः ग्रन्थाः।

मौलिककृतिषु संस्कृतवाङ्मयेन 'अविनाशि' इत्यभिनवं काव्यं शास्त्रिणः सुमहती सृष्टिः या यथार्थत एव कविकल्पनाविलासेन प्राचीनकामरूपस्यैतिहासिकवार्तया च सम्पृक्तं काव्यरत्नम्। ग्रन्थोऽयं १९८७ अब्दे 'साहित्य अकाडेमि' पुरस्कारेण सम्मानितः।

'अविनाशि' इति कवेरभिनवे काव्येऽस्मिन् प्राचीनकामरूपस्य सुप्रसिद्धनृपतेः कुमारभास्करवर्मणः जीवनमवलम्बनं कृत्वा कविकल्पनाप्रसूतं प्रेमवृन्तान्तं वर्णितं भवति। ग्रन्थोऽयं १९८२ अब्दतः १९८५ अब्दपर्यन्तं खण्डरूपेण 'प्राच्यभारती' इत्याख्य 'असमसंस्कृतवर्ड' इति समितेः मुखपत्रे प्रकाशितो भूत्वा १९८६ अब्दे ग्रन्थरूपेण प्रकाशितोऽभवत्। ग्रन्थकारेण तदीयोऽयं ग्रन्थः संस्कृतभाषायां सर्वप्रथम उपन्यास इत्यनेन यद्यपि ग्रन्थस्यास्य प्रारम्भ उच्यते, तत्र वक्तुं शक्यते यत् संस्कृतभाषायां

*विभागाध्यक्षा, संस्कृतविभागः, भट्टदेवविश्वविद्यालयः, बजाली


ISSN : 2454-2881

श्रीनाथ एच हासुरकारपादेन विरचितः 'सिन्धुकन्या' इत्याख्यात् ऐतिहासिकोपन्यासः १९८४ अब्दे 'साहित्य अकाडेमि' पुरस्कारेण सम्मानीत आसीत्। परन्तु शास्त्रिणः मतमपि स्वीकरणीयं यत् तेन (१९८२-अब्दतः -१९८५) पर्यन्तेषु अब्देषु ग्रन्थस्य खण्डरूपेण प्रकाशनकार्यं कृतमासीत्।

ग्रन्थेऽस्मिन् वर्णितः नायकः प्राचीनकामरूपस्य सुप्रसिद्धनृपतिः कुमारभास्करवर्मादेवः। वर्मणवंशत एव प्राचीनकामरूपस्य इतिहासकालः प्रारभत इति सर्वेषामितिहासविदां सर्वसम्मतमभिमतम्। गौडनृपतेः शशाङ्कस्य विरुद्धे थानेश्वरनृपतेः हर्षवर्द्धनस्य कुमारभास्करवर्मणः च युद्धयात्रा इतिहाससम्मता घटना। तस्मिन्नेव वृत्तान्ते ग्रन्थकारेण कल्पनाप्रसूतं प्रेमवृत्तान्तं चित्रितं यत्र नायिका माधवी यथार्थत एव कविकल्पिता न तु वास्तविकी। अतः तस्य वृत्तान्तस्य परिक्रमायां तदानीन्तनसमाजस्य कतिपयाः दिशः प्रतिफलिताः भवन्ति।

समुल्लेखनीयं यत् भास्करवर्मणः जीवनवृत्तमाश्रित्य दामोदरगुप्तकविना **कुट्टनीमतम्** इति काव्यं विरचितम्। काव्यस्यास्य विषयवस्तुन ऐतिहासिकत्वं यद्यपि संशयात्मकं तथापि तां सुरम्यां कथामाश्रित्य विश्वनारायणशास्त्रिणा उपन्यासोऽयं रचितः। प्रयोजने सति हर्षचरितादयः ग्रन्थाः चर्चिताश्च।

एवमैतिहासिकसामाजिकसांस्कृतिकधर्मीयशैक्षिकादयः दिशः सुस्पष्टतया प्रतिफलिताः प्राप्यन्ते। तद्वत् ग्रन्थस्यास्य काव्यिकप्रमूल्यमपि दृष्टिपथि समायाति। अतः पर्यवेक्षणलक्ष्येण एताः दिशः द्रष्टुं निबन्धेऽस्मिन् विधित्सा विद्यते।

**पद्धतिः -**

लेखनपरिक्रमायामत्र वर्णनात्मकपद्धतिः विश्लेषणात्मकपद्धतिश्च समाद्रियेते। आधारग्रन्थरूपेण विश्वनारायणशास्त्रिण 'अविनाशि' इति ग्रन्थः, प्रयोजने सति अन्ये ग्रन्थाश्च स्वीक्रियन्ते।

**पर्यालोचनम्-**

आङ्गलभाषायां 'नभेल' (Novel) इत्यनेन सुप्रसिद्धं साहित्यविशेषं पाश्चात्यसाहित्यस्यानवद्यमङ्गविशेषम्। भारतीयसाहित्ये Novel इति सुप्रसिद्धस्य साहित्यविशेषस्य 'उपन्यासः' इति प्रतिशब्दः स्वीक्रियते। पाश्चात्यसाहित्ये प्रायः ख्रीष्टियाष्टादशशतिकायां साहित्यजगति मानवहृदयस्य सुखस्य, दुःखस्य प्राप्तेरप्राप्तेः वास्तवजीवनाकाङ्क्षायाः चित्रणम् - इत्येवं प्रकारेण प्राचीनसंस्कारात् बहिरागत्य सुक्ष्मातिसुक्ष्मविषयाणां साङ्गोपाङ्गवर्णनासमृद्धं काव्यविशेषं जनप्रियं भवति। मानवहृदस्यावेगानुभूत्यादीनां सुस्पष्टवर्णनासम्पृक्तं गद्यमयं साहित्यमिदं 'नभेल' (Novel)इत्यनेन सुविदितं जातम्। रोमानभाषाया 'Novella' इति शब्दत आङ्गलभाषायां Novel इति शब्दस्य प्रचलनमभवदित्यनेन कथ्यते।

प्रणीधानीयं यत् भारतीयसाहित्ये विशेषतः संस्कृतहिन्दीवङ्गालासमीयाप्रभृतिषु भाषासु आङ्गलभाषायाः 'नभेल' इति पदस्य 'उपन्यास' इति समार्थकः शब्दः स्वीक्रियते। संस्कृतभाषायामस्य उपन्यास इति शब्दस्य व्युत्पत्तिप्रसङ्गे - 'उप' इत्युपसर्गस्य सामीप्यार्थः सामर्थ्यार्थो वा, नि- पूर्वके सति 'अस' - धातोः क्षेपणे घञ् इति प्रत्यये सति पुंलिङ्गे उपन्यास इति शब्दः। एवमस्यार्थः यत्र समीप एव निश्चिततया किमपि स्थाप्यते वर्ण्यते वा। सन्दर्भेऽस्मिन् ड° मालिनीगोस्वामीमहाभागानां मन्तव्यं समर्थयितुं शक्यते[1]। यत्रोच्यते यत् मानवजीवनस्य प्रायः सर्वाः दिशः, वास्तविकं सुखं, दुःखञ्च यत्र साङ्गोपाङ्गरूपेण चित्रीयन्ते समधिकतया निकटस्थरूपेण प्रत्यक्षीक्रियन्ते तदेवोपन्यासाभिधं काव्यमित्यनेन स्वीकर्त्तुं शक्यते।

पुनश्चायमुपन्यासाभिधं काव्यं किं पाश्चात्यसाहित्यस्यावदानमेव, भारतीयसाहित्य एतादृशस्य काव्यस्याभावो विद्यते किम्? यथार्थत एव प्रश्नः जायते। तत्रोच्यते यत् भारतीयसाहित्यं जनजीवनं वृत्तान्तवर्णने श्रवणे वा सुपरिचितमेव। भारतीयसाहित्यस्य 'कथासरितसागरः' दशकुमारचरितम्, कादम्बरी, पञ्चतन्त्रः, हितोपदेशः - इत्यादयः ग्रन्थाः जनमनसि सुप्रतिष्ठिताः। इतोपरि रामायणमहाभारतपुराणादीनां वृत्तान्तानि तु जीवनस्यापरिच्छेद्याङ्गानीव। अतः नूतनोऽयमुपन्यासः वास्तविकजीवनस्य सजीवचित्रमिव नवीनदृष्ट्या सततमेव समादृतं भवति।

विषयवस्तुनः भिन्नतामाश्रित्यापरकाव्यवत् उपन्यासस्यापि भेदाः विद्यन्ते। अतः सामाजिकोपन्यासः, ऐतिहासिकोपन्यासः, महाकाव्यिकोपन्यासः - इत्येवं प्रकारेण बहवः भेदाः प्राप्तुं शक्यन्ते।

अतीतमाश्रित्य वर्तमानः सुप्रतिष्ठितो भवति। ऐतिहासिकोपन्यासस्य रचनायां ग्रन्थकारेणेतिहासतः विषयवस्तुमादाय स्वकीयकल्पनासम्पृक्तं सजीवं सरसं काव्यं समुपस्थापनं क्रियते। अतः तस्मिन् क्षेत्रे यथार्थत एव इतिहासस्य निरसं वैशिष्ट्यं न समायाति। तथाकृते स्वतःस्फुर्त एव तदानीन्तनसमाजस्य विभिन्नाः दिशः प्रतिफलिताः भवन्ति। ग्रन्थस्य काव्यिकसौन्दर्यं कथं परिस्फुटं भवति तदपि ज्ञातुं शक्यते। इतिहासाश्रितवृत्तान्तं कवेरभिनवत्वं समादृत्य काव्यमिदं केन प्रकारेण विलसितं तदेवान्वेष्टुम् **'अविनाशि'** इत्युपन्यासः स्वीक्रियते।

**अविनाशिनि प्रतिफलिताः दिशः**

**ऐतिहासिकी दिक्**

प्राचीनकामरुपस्येतिहासः वर्मनवंशतः प्रारभत इति इतिहासविदां मतम्। अस्य वंशस्य द्वादशसंख्यकानां नृपतीनामुल्लेखः प्राप्यते। कुमारभास्करवर्मदेव अन्तिमः नृपतिः। तेजसा दीप्तया भास्करमपि ह्रेपयमानस्य भास्करवर्मदेवस्य डुवितामृलिपिः निधनपुरताम्रलिपिश्च प्राचीनकामरूपस्य समुल्लेखनीये प्रत्ययसिद्धे इतिहाससाक्षरे। भास्करवर्मणः पूर्वनृपतिना महाभूतवर्मणा तथा भूतिवर्मणा

ISSN : 2454-2881

दक्षिणपूर्ववङ्ग स्वायात्तं कृत्वा कामरूपस्याधिपतित्वं वर्द्धितमासीत्। अस्य नृपतेः शासनकालः (५१०-५५५) खीष्टाब्दकालः इति मन्यते। खीष्टियपञ्चमशतिकायाः शेषभागे प्रबलतरस्य हुणजातेः प्रभावात् सुविशालं गुप्तराज्यं भग्नप्रायमभवत्। गुप्तनृपतेः क्षीणशक्तेः सौविध्यं स्वीकृत्वा महाभूतवर्मणा पौण्ड्रवर्द्धनं कामरूपस्याधीनस्थं कृतम्। ततः विजयगौरवस्य स्मारकरूपेणानेन महाभूतवर्मणा पौण्ड्रवर्द्धने ब्राह्मणेभ्य अग्रहारभूमिः प्रदत्ताऽसीत्। कालवशात् हुतवहेन दग्धं तत् ताम्रशासनम्। कुमारभास्करवर्मदेवेन गौडैरपहृता सा भूमिः पुनरपि कामरूपस्याधीनस्था कृता। कर्णसुवर्ण-जयस्कन्धावारे वर्षं यावत् तिष्ठति भास्करवर्मा। तत एव ताम्रशासनं नवीकृत्वा पुनरपि कुमारभास्करवर्मदेवस्य निर्देशात् घोषितमभवत्। एतत् भास्करवर्मणः निधनपुरताम्रलिप्यां वर्णितमस्ति।

कुमारभास्करवर्मा प्राचीनकामरूपस्येतिहासप्रसिद्धः नृपतिः। अस्य राज्ञः जीवनवृत्तान्तस्य ऐतिहासिकसाक्षरस्वरूपेण तस्यैव **डुबिताम्रशासनम्, निधनपुरताम्रशासनम्**, बाणभट्टस्य **हर्षचरितम्**, नालन्दायां संप्राप्ता **मृन्मयमुद्रा**, चीनदेशस्य परिव्राजकस्य 'हिउवेन-चाङ्' इत्यस्य वर्णना च प्राप्यन्ते। खीष्टियषष्ठशतिकायाः शेषभागे सप्तमशतिकायाश्च प्रारम्भे भारतवर्षस्योत्तरप्रान्ते चत्वारः राजवंशाः शक्तिशालिन अभवन्। ते खलु थानेश्वरस्य पुष्पभुतिवंशस्य वर्द्धनाः, कनौजस्य मौखरिणः, मालवारदेशस्य गुप्तनृपतिः देवगुप्तः, गौडनृपतिः शशाङ्कश्च। थानेश्वरनृपतेः प्रभाकरवर्द्धनस्य कन्या राज्यश्री वैवाहिकसूत्रेण मौखरिनृपतये ग्रहवर्मणे प्रदत्ताऽभवत्। परवर्तिनि काले देवगुप्तस्य हस्ते राज्यश्रियः स्वामिनि ग्रहवर्मणि निहते सति राज्यश्री कारावन्दिनी अभवत्। थानेश्वरनृपतौ प्रभाकरवर्द्धने मृते ज्येष्ठपुत्रः राज्यवर्द्धनः सिंहासन अभिषिक्तोऽभवत्। ततः देवगुप्तस्य मित्रेण गौडाधिपेन शशाङ्केन छलेन राज्यवर्द्धनः निपातितः। ततः अराजके तस्मिन् थानेश्वरसिंहासने हर्षवर्द्धनोऽधिष्ठितो भूत्वा शशाङ्कस्य विरुद्धे युद्धयात्रां कर्त्तुं दृढसङ्कल्पितोऽभवत्। अत्रान्तरे कामरूपस्य नृपतिता कुमारभास्करवर्मणा हर्षवर्द्धनेन मित्रतामिच्छता हंसवेगाख्यः दूतः प्रेरितः, तयोः मित्रता स्थापिता। तयोः मित्रतायाः वार्तां प्राप्य प्रवलारातिः शशाङ्कः भीतो भूत्वा कलिङ्गं प्रति पलायितः। अत्रान्तरे भास्करवर्मणा पूर्वदिशतः शशाङ्कस्य राज्यमधिकरोति। एवं पुनरपि कर्णसुवर्णमण्डलसनाथं पोण्ड्रवर्द्धनं प्राग्ज्योतिषान्तर्गता भवति। ततः महाभूतवर्मणा पूर्वं समुद्घोषितम् इदानीं दग्धजातं शासनं पुनरति नवीकृत्वा कर्णसुवर्णमण्डलविजयस्य वार्ताञ्च लिखित्वा चन्द्रपुरिविषये भूमिदानस्य शासनं घोषितमभवत्। इयमेव निधनपुरताम्रलिपिः। चिलेटसंमण्डलस्य निधनपुरस्थाने इयं प्राप्ताभवत्। अत एव भास्करवर्मण इयं लिपिः निधनपुरताम्रलिपिः। वस्तुतस्तु अविनाशि इत्युपन्यासस्य कथावस्तुनः इयमेष ऐतिहासिकी भूमिः। इमामेव पृष्ठभूमिमाश्रित्य ग्रन्थकारेण काव्यमिदं प्रस्तूयते। ग्रन्थस्यादिभागे सुस्थितवर्मणः चरित्रमुपस्थापयित्वा गौडनृपतेः पौण्ड्रवर्धनाधिग्रहणसंघटनं वर्णितं भवति - 'अथ कदाचित् प्राग्ज्योतिषाधिपतिना सुस्थितवर्मणा चारमुखात् श्रुतं यत् गौड़ाधिपो रणैषी यानमाश्रयति।

ISSN : 2454-2881

अचिरादेव प्राग्ज्योतिषपुरं विजिगीषुः स चतुरङ्गबलेन पूर्वदेशभिमुखमागमिष्यति। इतः पूर्वं मालवाधिपतिना महासेनगुप्तेन गौडान् विजित्य पौण्ड्रवर्धनाख्यं भूखण्डं गृहीतं तस्मात्। तद् राज्यखण्डं वंशपरम्पराक्रमेण नारकाणामेव। विधिच्छलनवशाद् गौडैर्विजितम्[२]। एवं ग्रन्थेऽस्मिन् कुमारद्वयस्य युद्धयात्रा, शत्रुभिः कर्णसुवर्णदेशस्थे दुर्गे सानुचरं तयोः निरुद्धनवार्त्ता वर्णिता। समुल्लेखनीयं यत् एतत् शत्रुभिः निरुद्धनं भास्करवर्मणः डुवितामुलिप्यां वर्णितमस्ति[३]। कुमारद्वयस्य निरुद्धनस्य मुक्तेः सहायकरूपेण ग्रन्थकारेण बलाध्यक्षस्य सोमगुप्तस्य मित्रबन्धुगुप्तस्य चरित्रमङ्कितम्। बन्धुगुप्तस्य जीवनस्य परमदुर्दशायाः संघटकस्य गौडाधिपतेः कुकार्यस्य प्रतिशोधं पूर्णयितुं बन्धुगुप्तः दुर्गकपाटमुद्घात्य तौ स्वराज्यं प्रेषयति। शत्रुदुर्गात् पलायितौ तौ करतोयातीरे विद्यमाने महाकालमन्दिरे समुपस्थितौ। तत्रैव मन्दिराचर्यस्य पालिताकन्यां देवदासीं माधवीं पश्यति। इतिहास अविद्यमाना कविकल्पनाप्रसूतेयं माधवी एव काव्यस्य नायिका। स्मरणीयं यत् भास्करवर्मणः व्यक्तिगतजीवनवृत्तान्तप्रसङ्गे माधवी अन्या स्त्री वा काऽपि न विद्यत इतिहासे। एवं ग्रन्थेऽस्मिन् कर्णसुवर्णजयस्कन्धावारे वर्षं यावत् यदा भास्करवर्माऽसीत् तदा एव चन्द्रपुरिविषयात् वाजसनेयिनः याजयुकाः केचन् ब्राह्मणाः राजानं द्रष्टुं गतवन्तः। तेषां प्रार्थनानुसारेण पूर्वजनृपतिना भूतिवर्मदेवेन प्रदत्तस्य शासनस्य नवीकरणाय आज्ञा प्रदत्ताऽभवत। सैव लिपिः निधानपुरताम्रलिपिः। या ऐतिहासिकी प्राचीनकामरूपस्य प्रत्ययसिद्धा लिपिः विद्वद्भिः च समादृता।

ग्रन्थेऽस्मिन् थानेश्वराधिपतिं प्रति भास्करवर्मणा मित्रतामिच्छता सम्प्रेषितस्य दूतहंसवेगस्य समुल्लेखः विद्यते। प्रागज्योतिषेश्वरेण भास्करवर्मणा दूतस्य हस्ते मित्रतायाः सम्मानार्थं सन्देशमशून्यं कृत्वा प्राग्ज्योतिषोद्भवं क्षौमदुकुलादिकम्, वरुणादाहृतम् आभोगाख्यातं महिमामण्डितमातपत्रं यत् चक्रवर्तिनं विना न छायां ददाति एवमन्यनानि महामूल्यानि द्रव्यानि प्रेषितान्यभवन्। बाणभट्टस्य हर्षचरिते एतानि सर्वाणि सुविस्तृतया वर्णितानि विद्यन्ते[४]। परन्तु ग्रन्थकारेण विषयवस्तुनः यथार्थतां विमृश्य तत् वृत्तान्तं संक्षिप्ततया समुपस्थापितं महाचीनादागतः हिउवेन चाङ्- इत्यभिधः बौद्धभिक्षुः भारतवर्षस्येतिहासस्य सम्मुलेखनीयः पात्रविशेषः। शैशवादेव श्रमणचर्चां चरन् महता कायक्लेशेन दुर्गमगिरिदरीमरुकान्तारान् समुत्तीर्य स अध्वश्रमं स्वीकृत्य भारतवर्षमागत्य नालन्दाविहारे योगज्ञानं लब्धवान्। ग्रन्थेऽस्मिन् धर्मोत्तराचार्यनाम्ना वर्णितः परिव्राजकोऽयं कुमारभास्करवर्मणः जीवनपरिक्रमायाः वर्णनप्रसङ्गे चित्रितो विद्यते। ग्रन्थेऽस्मिन् भास्करवर्मणः विद्याव्यसनजिज्ञासा प्रतिफलिता विद्यते। नालन्दाविहारस्य कुलपतिना शीलभद्रेण थानेश्वराधिपतेः हर्षस्यामन्त्रणमपि यद्यपि प्रत्याख्यातमासीत् परन्तु भास्करवर्मणः सुदृढेच्छासमन्वितं पत्रं प्राप्य धर्मरत्नेन दूतेन सह प्रागज्योतिषपुरं प्रेषितः धर्मोत्तराचार्यः। एवं प्राचीनकामरूपस्य जनानां जीवनं धर्माचरणं वेशाभूषादिकं सर्वं सुविस्तृतं विवृतं प्राप्यते 'हिउवेन चाङ' इति श्रमणस्य वर्णनायाम्। यत् विवरणमितिहासस्य प्रमाणस्वरूपं तथ्यम् न केवलं प्रागज्योतिषपुरस्यापि तु भारतवर्षस्यैव।

ISSN : 2454-2881

अचिरादेव प्रागज्योतिषपुरं विजिगीषुः स चतुरङ्गबलेन पूर्वदेशभिमुखमागमिष्यति। इतः पूर्वं मालवाधिपतिना महासेनगुप्तेन गौडान् विजित्य पौण्ड्रवर्धनाख्यं भूखण्डं गृहीतं तस्मात्। तद् राज्यखण्डं वंशपरम्पराक्रमेण नारकाणामेव। विधिच्छलनवशाद् गौडैर्विजितम्[२]। एवं ग्रन्थेऽस्मिन् कुमारद्वयस्य युद्धयात्रा, शत्रुभिः कर्णसुवर्णदेशस्थे दुर्गे सानुचरं तयोः निरुद्धनवार्त्ता वर्णिता। समुल्लेखनीयं यत् एतत् शत्रुभिः निरुद्धनं भास्करवर्मणः डुवितामलिप्यां वर्णितमस्ति[३]। कुमारद्वयस्य निरुद्धनस्य मुक्तेः सहायकरूपेण ग्रन्थकारेण बलाध्यक्षस्य सोमगुप्तस्य मित्रबन्धुगुप्तस्य चरित्रमङ्कितम्। बन्धुगुप्तस्य जीवनस्य परमदुर्दशायाः संघटकस्य गौडाधिपतेः कुकार्यस्य प्रतिशोधं पूर्णयितुं बन्धुगुप्तः दुर्गकपाटमुद्घात्य तौ स्वराज्यं प्रेषयति। शत्रुदुर्गात् पलायितौ तौ करतोयातीरे विद्यमाने महाकालमन्दिरे समुपस्थितौ। तत्रैव मन्दिराचर्यस्य पालिताकन्यां देवदासीं माधवीं पश्यति। इतिहासे अविद्यमाना कविकल्पनाप्रसूतेयं माधवी एव काव्यस्य नायिका। स्मरणीयं यत् भास्करवर्मणः व्यक्तिगतजीवनवृत्तान्तप्रसङ्गे माधवी अन्या स्त्री वा काऽपि न विद्यत इतिहासे। एवं ग्रन्थेऽस्मिन् कर्णसुवर्णजयस्कन्धावारे वर्षं यावत् यदा भास्करवर्माऽसीत् तदा एव चन्द्रपुरिविषयात् वाजसनेयिनः याजयुकाः केचन् ब्राह्मणाः राजानं द्रष्टुं गतवन्तः। तेषां प्रार्थनानुसारेण पूर्वजनृपतिना भूतिवर्मदेवेन प्रदत्तस्य शासनस्य नवीकरणाय आज्ञा प्रदत्ताऽभवत। सैव लिपिः निधानपुरताम्रलिपिः। या ऐतिहासिकी प्राचीनकामरूपस्य प्रत्ययसिद्धा लिपिः विद्वद्भिः च समादृता।

ग्रन्थेऽस्मिन् थानेश्वराधिपतिं प्रति भास्करवर्मणा मित्रतामिच्छता सम्प्रेषितस्य दूतहंसवेगस्य समुल्लेखः विद्यते। प्रागज्योतिषेश्वरेण भास्करवर्मणा दूतस्य हस्ते मित्रतायाः सम्मानार्थं सन्देशमशून्यं कृत्वा प्रागज्योतिषोद्भवं क्षौमदुकुलादिकम्, वरुणादाहृतम् आभोगाख्यातं महिमामण्डितमातपत्रं यत् चक्रवर्तिनं विना न छायां ददाति एवमन्यनानि महामूल्यानि द्रव्यानि प्रेषितान्यभवन्। बाणभट्टस्य हर्षचरिते एतानि सर्वाणि सुविस्तृतया वर्णितानि विद्यन्ते[४]। परन्तु ग्रन्थकारेण विषयवस्तुनः यथार्थतां विमृश्य तत् वृत्तान्तं संक्षिप्ततया समुपस्थापितं महाचीनादागतः हिउवेन चाङ्- इत्यभिधः बौद्धभिक्षुः भारतवर्षस्येतिहासस्य सम्मुलेखनीयः पात्रविशेषः। शैशवादेव श्रमणचर्चां चरन् महता कायक्लेशेन दुर्गमगिरिदरीमरुकान्तारान् समुत्तीर्य स अध्वश्रमं स्वीकृत्य भारतवर्षमागत्य नालन्दाविहारे योगज्ञानं लब्धवान्। ग्रन्थेऽस्मिन् धर्मोत्तराचार्यनाम्ना वर्णितः परिव्राजकोऽयं कुमारभास्करवर्मणः जीवनपरिक्रमायाः वर्णनप्रसङ्गे चित्रितो विद्यते। ग्रन्थेऽस्मिन् भास्करवर्मणः विद्याव्यसनजिज्ञासा प्रतिफलिता विद्यते। नालन्दाविहारस्य कुलपतिना शीलभद्रेण थानेश्वराधिपतेः हर्षस्यामन्त्रणमपि यद्यपि प्रत्याख्यातमासीत् परन्तु भास्करवर्मणः सुदृढेच्छसमन्वितं पत्रं प्राप्य धर्मरत्नेन दूतेन सह प्रागज्योतिषपुरं प्रेषितः धर्मोत्तराचार्यः। एवं प्राचीनकामरूपस्य जनानां जीवनं धर्माचरणं वेशाभूषादिकं सर्वं सुविस्तृतं विवृतं प्राप्यते 'हिउवेन चाङ' इति श्रमणस्य वर्णनायाम्। यत् विवरणमितिहासस्य प्रमाणस्वरूपं तथ्यम् न केवलं प्रागज्योतिषपुरस्यापि तु भारतवर्षस्यैव।

ISSN : 2454-2881

वर्मणशालस्तम्भपालवंशीय नृपतीनां पृष्ठपोषकतायां शैवमार्गः सुप्रतिष्ठितोऽभवदिति विदूषां मतम्। भास्करवर्मणः पूर्वपुरुषाऽपि शैवा आसन्। वनमालवर्मदेवस्य तेजपुरताम्रलिप्यां भगदत्तः शिवानुरक्त आसीदिति वर्ण्यते[९]। तेथैव वलवर्मण उत्तरवरविलताम्रलिपिः वज्रदत्तः शिवभक्त इति वर्णयति[१०]।

ग्रन्थेऽस्मिन् प्रधानतया शिवपूजा विद्यते। महाकालमन्दिरे प्रत्यहं यथाविधि पूजार्चनं भवति। आचार्यः देवस्वामी प्रतिदिनमवसिते ध्याने दूर्वाक्षत-करवीरकूसुमैः कल्पितार्घ्याय महाकालाय स्तोत्रेण प्रणामं निवेदयति - जटाकटाह सम्भ्रम भ्रमन्.....[११]। प्रतिक्षणं मम्॥ एवं शैवमार्गस्य प्राधान्यता ग्रन्थेऽस्मिन् अन्तः सलिला फल्गुरिव प्रवहति।

**कापालिकसम्प्रदायः**

उपन्यास्यास्यान्तिमभागे शैवधाराया अन्यतमसम्प्रदायस्य कापालिकसम्प्रदायस्य वर्णनं समुपलभ्यते। कापालिनं शिवं यः पूजयति स एव कापालिकः। तेषां मतेन ब्रह्माण्ड एव कपालः। आकाशः कपाल इव। कपालो मूलं सर्वस्य। तस्मात् ते नरकपालहस्ताः भ्रमन्ति। तेषां मतेन पेयं मोक्षार्थम्। सुरापानात् साधकः सुरत्वं लभते। तस्मादेव सुरायाः सुरत्वम्। सुरापानादेव भैरवः चक्रस्थो भवति। निरासक्तो भूत्वा सुन्दरीं नटीं कापालिकीं वराङ्गनां प्रति यदासक्तो भवति तदैव साधको भैरवी-चक्रस्थो भवति। ततस्य सिद्धिः। तत एवं सर्वं करतलामलकवद् भवति।

ग्रन्थेऽस्मिन् कापालिकसम्प्रदायस्य दिकदर्शनें चित्रितं भवति। मदनद्वादशीदिवसतः चतुर्दशीदिवसपर्यन्तं मदनोत्सवार्थं पूर्णतयोद्यानं सुसज्जितम्।

ललितायाः कुमन्त्रणामनुसरन्त्या क्षेमया छलेन केनाप्यनुपलक्षिता माधवी कापालिकसमीपं नीता। नग्नान् नरकपालहस्तान् कापालिकान् भैरवञ्च पानासक्तं दृष्ट्वा माधवी भीता जाता। वेदिकायामुविशन्तीं तां भैरवी जयन्ती मदिरापूर्णं कपालं ददाति। कपालं मदिराञ्चावलोक्य सा जुगुप्सते। उपायविहीना सा पिवति कपालपात्रस्थं मद्यम्। ततः मदधूर्णितलोचनां तां यावद भैरवो चक्रस्थां कर्त्तुं प्रवर्तितां भवेत् तावदेवमहान कोलाहलः जातः। भाग्यवशादेव माधवी कथञ्चित्ततः पलायते।

**बौद्धधर्मः**

ग्रन्थेऽस्मिन् प्राचीनकामरूपे तथा कामरूपस्य प्रतिवेशीराज्येषु च बौद्धधर्मस्य स्थितिः कीदृशी आसीत् तस्मिन् विषये चित्रमेकं प्राप्तुं शक्यते।

सुप्रसिद्धस्य नालन्दामहाविहारस्य प्रसिद्धिः भारतवर्षमतिक्रमितवान्। आगान्धाराद् विद्यार्थिनः ज्ञानलाभार्थमागतवन्तः। प्रज्ञापारमितायां वितर्के अभिधर्मे त्रिपिटके च निष्णाताः भिक्षवः आचार्यकल्पा एव। वेद-पुराण-महाकाव्यादीनामुपरि तत्रायुर्वेदस्यापि चर्चाऽभवत्। प्राग्ज्योतिषपुरतः सुचरिताख्यः बौद्धभिक्षुः नालन्दा महाविहारं गत्वा आचार्यशीलभद्रस्य दर्शनं प्राप्तवान्। कथाप्रसङ्गे तेन


ISSN : 2454-2881

प्राचीनकामरूपेण सह सम्बन्धयुवतान्याख्यानानि कथितानि।

तस्मिन्नेवावसरे तेन बौद्धधर्मस्य प्राग्ज्योतिषपुरे तदानीन्तनसमयस्य स्थितेः विषये कथितवान्। यदिदानीं विद्यार्थिनः न जानन्ति प्रतीत्यसमुत्पादं नानुशीलनं कुर्वन्ति पञ्चस्कन्धविज्ञानस्य। सुगतस्य सर्वज्ञतत्वमपि वेदवादिभिर्न स्वीक्रियते। परन्तु प्राग्ज्योतिषपुरं सुराजकं राष्ट्रम्। प्रजाः सर्वथा सुरक्षिताः। स्थाणुपदारविन्दपरायणः परममाहेश्वरो राजा सर्वधर्मसमानव्रतमुद्यापयतीत्यनेन सुचरितेन धर्ममित्रस्य समीपे निगदितवान्। तत एव धर्ममित्रः प्रागज्योतिषपुरं प्रति कमपि श्रमणं प्रेषयितुं निश्चितं कृत्वा महास्थविराय कुलपतये शीलभद्राय निवेदयितुं प्रस्थितः। एवं प्रसङ्गक्रमेण महाचीनादागतवतः 'हिउवेनचाङ्' इत्यभिधस्य परिव्राजकस्य विवरणं समुल्लेखितं प्राप्यते। शैशवादेव श्रमणचर्यामाचरन् सः शाक्यमुनिजन्मस्थानदर्शनाकाङ्क्षी महता कष्टेन दुर्गमगिरिवनानतिक्रम्य भारतवर्षमागत्य धर्मोत्तराचार्य इत्यभिधया प्रसिद्धिं प्राप्तवान्। कुमारभास्करवर्मणः सादरमनुरोधं स्वीकुर्वन्नेषः धर्मोत्तराचार्यः प्राग्ज्योतिषपुरमागत्य लोकानां धर्माचरणं वेशभूषादिकं भाषाञ्चाधिकृत्य विवरणं लिखितवान्। एवं प्राग्ज्योतिषनृपतेः बौद्धधर्मं प्रति विद्यमानानुरागस्य विषये ज्ञायते। ख्रीष्टियसप्तमशतिकायाः प्राग्ज्योतिषपुरे बौद्धधर्मस्य प्रभावस्य विषये दिक्दर्शनं प्राप्तुं शक्यते।

शैक्षिकदिक् :

उपन्यासस्यास्यानुधावनात् तदानीन्तनसमयस्य शिक्षाव्यवस्थायाः चित्रमेकमनुमीयते। ब्राह्मणेषु वेदाध्ययनस्य सुस्पष्टं वर्णनं समुपलभ्यते। कुतः चन्द्रपुरिविषयात् समागतेषु श्रोत्रियेषु वेदस्य सुनिर्दिष्टशाखान्तर्गताः ब्राह्मणा आसन्। ते दशपौर्णमासैर्यजन्ते, तेषु वाजपेयी देवशर्मा, कात्यायनप्रमुखाः कौथुमाः, कुण्डस्वामी सोमयाजी-इत्येवं प्रकारेण वेदस्य प्रमुखशाखानामनुगामिनः विद्यन्ते। तथैव न्यायनिपुणः पक्षिलस्वामी, मीमांसाप्रवीणः कुमारस्वामी, पदवाक्यप्रमाणपारावारपारीणः नारायणभट्टः इत्यादयः विदग्धाः पण्डिताः तथैव नाट्यशास्त्रे च प्रवीणाः ब्राह्मणाऽपि आसन्[१२]। तथैव राज्ये च ब्राह्मणादीनां शिक्षायाः सम्यक् व्यवस्थायाः प्रतिफलनमवज्ञायते। नालन्दामहाविहारस्य कीर्तिः तु भारतवर्षात् बहिर्गतवान्। महाचीनादागतः हिउवेनूचाङ परिव्राजक एव प्रमाणस्वरूपः।

देवदास्याः माधव्याः शिक्षाव्यवस्थाऽपि सन्दर्भेऽस्मिन् विशेषरूपेण समुल्लेखनीया। मालतीचरित्रस्य मुखादपि तदानीन्तनकालस्य नारीशिक्षायाः दिक्दर्शनं प्राप्यते। बाल्यकाले तया पितृगृहे काव्यव्याकरणनृत्यादीनां शिक्षा प्राप्ताऽसीत्। यौवने तया वात्स्यायनस्य कामशास्त्रमपि अधीतमासीत्। ततः सा पितृपरम्पराक्रमेण वाणिज्ये नियुक्ताऽभवत्।

माधव्याः दिनचर्या प्रसङ्गेऽस्मिन् यथार्थतः मार्गदर्शिका भवति। प्रतिदिनं नृत्यानुशीलनानादनन्तरं सा प्रातराशं स्वीकृत्वा आचार्य विष्णुदत्तसमीपे सा काव्य-नाटकादीनामध्ययनं करोति। कालिदासादीनां

प्रसिद्ध महाकवीनां कृतिराशितः तस्याः सततमेव समालोचनं तथैवादिकविना सह कालिदासस्य सृष्टेः सादृश्यमित्यादिभिः प्रमाणैः नूनं तदानीन्तनसमये नारीणां विशेषतः देवदासीनां सुशृङ्खलितशिक्षायाः सुस्पष्टं चित्रं प्रकटी करोति। माधव्या पुराणेतिहासकाव्य नाटकादीनामुपरि नाट्यशास्त्रस्यापि ज्ञानमाहरणीयमासीत्। अपराह्ने पुनः कलानुशीलनम्। ततः शुकसारिकादीनामालापनं यथारुचिर्वा भ्रमणमुद्याने। एवं प्रकारेण तस्याः दिनचर्याया अवलोकनादेव तदानीन्तनशिक्षायाः चित्रमेकं प्राप्तुं शक्यते।

उपन्यासेऽस्मिन् शिक्षाकलादिभि सुसमृद्धः समाजः वर्णितो भवति। विभिन्नधर्मस्य विभिन्नसम्प्रदायस्य सम्प्रीतिः विराजिताऽसीत्। उदाहरणरुपेण - चन्द्रपुरिविषयः समुल्लेखनीयः। तत्र श्रौतं स्मार्तं च कर्माचरन्तः वैदिकधर्मानुचारिणः वसन्ति। तथैव तत्र तान्त्रिकाः कापालिकाश्च सन्ति। केचन पुनः वामाचारेण पुजयन्ति कामेश्वरमहागौरीम्। एवं तत्र चीनाचारमपि केचन समाचरन्ति।

एवं वृत्तान्तवर्णनायां प्रसङ्गक्रमेण जनक - 'याज्ञवल्क्यसंवादः', 'नरकाख्यानम्', 'कामदहनम्', 'वशिष्ठनरकयोराख्यानम', 'विश्वामित्रमेनकाख्यानम', पुरुरवा-उर्वर्शी-वृत्तान्तम् - इत्येवं प्रकारेण वेदपुराणेतिहासादोनां वृत्तान्तानां समुल्लेखनं प्राप्यते। भारतीयैतिह्यवाहकानि वृत्तान्तानि तदानीन्तनसमाजे सुपरिचितानि आसन्निति वक्तुं शक्यते।

**चित्रकलायाःचर्चा :**

उपन्यासेऽस्मिन् चित्रकलायाः निदर्शनं प्राप्यते। गौडनृपतेः गुप्तचरेण माधवेन सह कुमारभास्करवर्मणा नियुक्तायाः जलप्रपायाः रक्षिकायाः मालत्याः संयोगः ग्रन्थेऽस्मिन चमत्कारपुर्णः कौशलः।

घटनाक्रमेण द्वयोः रात्रियापनं भवति कर्णसुवर्णविषये एकस्यामतिथिशालायाम्। तत्रैव पान्थानां नेत्रविलोभनजनकानि विचित्राणि भित्तिचित्राणि शोभन्ते। शिल्पिनां नैपुण्यप्रकाशितानि तानि चित्राणि प्राणमयानि। भित्तिषु विश्वामित्र-मेनकयोः रमणीयं चित्रं विद्यते यत्र चित्रकरस्य कलानैपुण्यं प्रकाशितं भवति। नृत्यपरायणायाः स्खलितदुकुलायाः स्तनयोः पीनोन्तुङ्गत्वं यथा दृष्टिविलोभनं जनयेत् तथा कृतं चित्रकारेण।

एवं चित्रेषु पुरुरवोर्वश्योः , ऋष्यश्रृङ्गमुनेः गणिकाभिः सह, अहल्येन्द्रयोः चित्रम् - इत्येवं प्रकारेण प्रसिद्धान्याख्यानानि वर्णभावावेगादिभिः समृद्धं कृत्वा चित्रितानि विद्यन्ते। नूनमेवैतानि वर्णनानि तदानीन्तकालस्य चित्रकलायाः परिचायकानि।

**नृत्यचर्चा :**

देवदास्याः माधव्याः नृत्यचर्चायाः वर्णने नृत्यशास्त्रदिशा नृत्यकलायाः सम्यक् चित्रमेकं प्राप्यते। माधवी प्रतिदिनं नृत्यारम्भे गुरुवन्दनां करोति, नृत्यावसाने च। अग्नौ कर्पूरचूर्णं दत्वा नृत्यानुशीलनस्य

ISSN : 2454-2881

शपथः गृहीतः। मार्दङ्गिकस्य जयदेवस्य निर्देशात् सा अनुशीलयति भङ्गि–वृत्रिमुद्रा – रेचकादीनि। एवं तया चारी – भुजङ्गत्रासिता – मृगप्लुता–भ्रमरी – प्रभृतीनां नृत्यभङ्गीनां शिक्षणमायत्तं कृतम्। एवं नाट्यशास्त्रस्य शिक्षणं प्रात्पमाचार्यात्। रङ्गे पात्रप्रवेशनं, पात्राणां प्रकृतित्वमेतानि सर्वाणि नाट्यशास्त्रस्य विधानानि आचार्यनिर्देशात् प्राप्तानि। देवस्वामी नृत्याचार्यः महाकालमन्दिराभ्यासे निवसति। तत्रैव देवकुलिकाः वसन्ति। देवदासीषु नृत्यद्वन्दोऽनुष्ठितो भवति। नृत्यस्पर्द्धायां नटीमुख्या निर्वाचिता भवति। एवं प्रकारेण दृश्यते यत् नृत्यकलायाः चर्चा सम्यकरूपेण कृता आसीत्।

**चिकित्साशास्त्रम् :**

ग्रन्थेऽस्मिन् प्रसङ्गक्रमेण तदानीन्तनसमाजे प्रचलितस्य चिकित्साशास्त्रस्यापि चित्रमङ्कितं भवति। अकस्मादेव भास्कर वर्मदेवपादो भृशम् अस्वस्थो जातः। दाहज्वरेण पीडितः अतः वैद्यैः सेव्यमानो राजा समुद्रगृहे विगतचेतन इव शयानस्तिष्ठति। राजवैद्यः मणिगुप्तः राजानं सुचिरं निरीक्ष्य रोगस्य लक्षणं तर्कयति 'इयं वक्रगतिं भजमाना चपला च नाडी वातपित्तजं रोगं सूचयति। नूनं द्वन्द्वजो रोगः।' प्रसङ्गेऽस्मिन् तेन शास्त्रवचनञ्च स्मरति[13]। दाहज्वरेण पीडितस्य राज्ञः हिमवद् विशदा नाडी दिनत्रयेन मृत्युं सूचयति। एवं शास्त्रोक्तविधिना राज्ञः रोगोपशमाय प्रचेष्टा चलति।

एवं प्राचीनरोगनिरूपणविधिः, रोगलक्षणं वा प्रकाशितं प्राप्यते प्रसङ्गेऽस्मिन्।

**सांस्कृतिकदिक् :**

समाज एव संस्कृतेः जनकः। समाजः संस्कृतिश्च परस्परसम्पृक्तरूपेण विद्येते। साहित्यं समाजस्य दर्पणस्वरूपम्। अतः साहित्ये प्रत्यक्षतयाप्रत्यक्षतया वा समाजः प्रतिफलितो विद्यत एव। ग्रन्थेऽस्मिन् खीष्टियसप्तमशतिकायाः प्राचीनकामरूपस्य सांस्कृतिकजीवनमपि द्रष्टुं शक्यते।

अत्र चित्रितः समाजः शिक्षासंस्कृतिधर्मकर्मोत्सवपार्वनादिभिः सुसमृद्धः प्राचुर्यपूर्णः राजनैतिकपरिस्थितिः यद्यपिक्षणिककालाय शान्तिव्याघातदायिनी आसीत् तथापि तत्रोत्सवपार्वनव्रतादीनां धर्मीयानुष्ठानानां नृत्यगीतादीनाञ्च हर्षोल्लासपूर्णमायोजनं दरीदृश्यते।

नृत्यगीतादीनां धर्मीयरीतिपर्वव्रतादीनां केन्द्रविन्दुरस्ति महाकालमन्दिरम्। दक्षिणसागरगामिनी सदानीरा करतोया। करतोयातीरे सुप्राचीनं महाकालमन्दिरम्। महाकालदर्शनाय दूरान्तिकेभ्यो दर्शनार्थिन आगच्छन्ति धर्मीयरीत्या तत्र पूजनोपचारादय अनुष्ठिताः भवन्ति। चैत्र संक्रमण–स्नानार्थं माधवी समुपगता करतोयातीर्थम्। प्रात एव दूरान्तिकेभ्यः समागताः जनाः कोलाहलं कुर्वन्त आसते। नरनारीशिशुवृद्धयुवकयुवत्यः पौण्ड्वर्द्धननिवासिनः स्नानार्थं युगपदेव यतन्ते निर्मले जले, तेषां स्तवनं श्रुतिपथमायाति –

करतोये सरिच्छ्रेष्ठे पावने शोभने शुभे।

विमलेन जलेनास्मान् पाहि नो दुष्कृतात्कृतात्[१४] ॥

तत्र केचन देवान् पितृञ्च तर्पयन्ति पुण्यसलिलैः। केचन् सवितारं समुद्यन्तं नाभिमात्रं जले स्थिताः कृताञ्जलयः प्रणमन्ति। एवं ग्रन्थोऽयं धर्मीयपरिवेष्टनेन प्रारभते।

मदनोत्सवस्य सुविस्तृता वर्णना विद्यते। ग्रन्थस्य कथावस्तुनः वर्णनपरिक्रमायां मदनद्वादशीतः चतुर्दशीपर्यन्तं मदनोत्सवः समायाजितोऽस्ति। मदनोत्सवार्थमुद्यानं सुसज्जितम्। पूर्वं दमनवृक्षे मदनः पूज्यते स्म। इदानीं मदनस्य प्रतिमा स्थाप्यते। मदनस्य वामपार्श्वे रतिदेव्याः प्रतिमा। प्रथमसन्ध्यायां हरिद्राचूर्णैः केशवरूपिणं मदनं पूजयन्ति जनाः। इक्षुदण्डेन च पूजयन्ति मदनम्। सन्ध्यायां ललिता प्रमुखराजावरोधाः नीलाभं वसनं वसनाः मदनदर्शनाय तत्रागताः। युवतयः रतिसहितं मदनं स्तवेन स्तुवन्ति।

देवदासी माधवी तत्रागच्छति। वाटिकाया अन्यस्मिन् स्थाने कृतप्रसाधनाः नागरयोषाः वेशविन्यासनिपुणाः विलासिन्यः गृहीतालङ्काराभूषणाः तरुण्यः सुवेशैर्नागरैः मिलित्वा नरीनृत्यन्ते पानासक्ताः महिलाः, पानोमत्तैर्युवकैः सह हासपरिहासेन मदनोन्माथिनीमालापं कुर्वन्त्यः तत्र आनन्दोन्मत्ताः तिष्ठन्ति। एवं सर्वत्र उत्सवमुखरः परिवेशः विराजते। तस्मिन्नेवोत्सवे माधवी दमनकवृक्षतले विद्यमानं मदनप्रतिमां "आधयो मम नश्यन्तु व्याधयः शरीरजाः" इत्यनेन प्रार्थयन्ती तिष्ठति। तस्मिन्नेव क्षणे ललितायाः मन्त्रणामनुपालयन्त्या क्षेमया केनाप्यनुपलक्षिता माधवी कापालिकानां समीपं नीता। एवं कथांशानां वर्णनायामुत्सवस्य वर्णना सम्पृक्ता दृश्यते।

**देवदासीपरम्परा :**

देवादिदेवः महादेवः भारतीयपरम्परायां नृत्यगुरुः। भगवतः शिवस्यार्चनायां नृत्यगीतस्तवनादिभिः भक्तैः परमा भक्तिः निवेद्यते। तथाहि शिवमन्दिरेषु नृत्याङ्गनानां मनोमुग्धकराणि नृत्यानि संयोजितानि भवन्ति। भारतवर्षस्य केरेला-तामिनाडु-अन्ध्रप्रदेश-कर्णाटक-उरिष्या-महाराष्ट्र-राजस्थान-पश्चिमवङ्गप्रभृतिषु राज्येषु शिवमन्दिरेषु देवदासीपरम्परा प्रचलिताऽसीत्। एवं दाक्षिणात्य उरिष्याराज्ये च यस्मिन् समये देवदासी परम्परायाः पूर्णविकाशोऽभवत् तस्मिन् समये प्राचीनकामरूपे राज्येऽपि देवदासीनृत्यपरम्परा प्रचलिताऽभवदिति मन्यते। खीष्टियनवमशतिकायाः नृपतेः वनमालदेवस्य तेजपुरताम्रलिप्यां शिवालयेषु वेश्याङ्गनानां समुल्लेखनात् प्राचीनकामरूपे देवदासीपरम्परायाः समुपस्थितेः निदर्शनं प्राप्यते। एवमसमराज्यस्य नेघेरीटिङशिवमन्दिरे, विश्वनाथशिवमन्दिरे, डुविपरिहरेश्वर देवालये च देवदासीपरम्परायाः प्रचलनमासीदिति ऐतिहासिकं साक्ष्यं विद्यते।

ISSN : 2454-2881

उपन्यासेऽस्मिन् नायिका माधवी महाकालमन्दिरस्य नृत्यपटीयसी देवदासी। महाकालमन्दिरस्याचार्येण देवस्वामिना काम्यते यत् महाकालाय अनाघ्रातं पुष्पमिव, किसलयमलमलुनमिव काचित् गौडी कन्या समर्पणीया। या बाल्यात् प्रभृति चतुःषष्टिकलासु तपश्चर्यायाञ्च शिक्षणीया भवेदिति। एवं प्राप्ते वयसि सा यथाविधि भवेदभिषिक्ता। सांयात्रिकः वसुमित्रः महता यत्नेन ताम्रलिप्तिपत्तनात् कनकश्यामा अष्टवर्षीया गौरी माधवी देवस्वामिनः समीपमानयति। समुल्लेखनीयं यत् शास्त्रीयवचनानुसारेण अष्टवर्षीया कन्या गौरी संज्ञकेति[१६]।

परमकृतार्थः वसुमित्रः देवस्वामिना सुवर्णमुद्राशतेन सम्मानितः। ततः प्रभृतिः माधव्याः दशवार्षिकव्रतोद्यापनं प्रारभते। तस्मात् दिनात् देवस्वामिनः परमर्शानुसारं नान्यो मर्त्यः तया कायेन मनसा वाचा काम्यः। महाकाल अविनाशि प्रेम। न हि विनाशियौवनाय कस्मैचित् मानवाय। माधवी महाकालवधूत्वे वृत्वा कलानिपुणां कर्तुं सुशृङ्खलिता दिनचर्या प्रारभते। अरुणोदयात् प्रागेव माधव्याः शय्याया उत्थानम्। ततो दन्तधावनम् तदनन्तरं करतोयायां स्नानम्। ततः पत्रोर्णं परिधाय धूपं स्रजं गृहीत्वा महाकालार्चनं कृत्वा नृत्यानुशीलनं प्रारभते। आचार्य देवस्वामी प्रत्यहं शिक्षयति भङ्गिमुद्रासहितं नृत्यम्। मार्दङ्गिकी जयदेवो वादयति मृदङ्गम्। एवं दशवार्षिकतपश्चर्यायाः काले प्रतिदिनं तया नृत्यं वेदवेदाङ्गपुराणेतिहास काव्यनाट्यशास्त्रादीनामध्ययनं कृतम्। दशवर्षादन्तरं मधुमासे मदनत्रयोदश्यां नृत्यस्पर्द्धा भविता। तत्रैव नदीमुख्या भूत्वा सर्वेषां मुर्ध्नि सा माधवी विराजमाना भवेदिति देवस्वामिनः मनस अभिलाषः। एवं सर्वं यावत् सम्पत्स्यमानं तावदेव तत्रागतौ राजकुमारौ। एवं नायिकायाः देवदास्याः माधव्याः जीवनपरिक्रमा प्रारभते ग्रन्थेऽस्मिन्।

**अपराः कतिपयाः दिशः**

**वेषभूषणपानभोजनादयः**

लोकसमाजे प्रचलिताः वेषभूषणपानभोजनादयः समाजस्य लोकानां संस्कृतेः परिचायकाः जनानां रुचिः, सौन्दर्यवोधः स्वाभाविकतया तेषामाचरणेषु वेषेषु भूषणादिषु तथैव खाद्याभ्यासे प्रतिफलिता भवन्ति। ऐतिहासिकपृष्टभूम्यां विरचिते ग्रन्थेऽस्मिन् ग्रन्थकारेण पटुतया तदानीन्तनसमाजस्य एताः दिशः चित्रणे नटीनां वेषभूषणप्रसाधनादीनां चित्रं सुन्दरतया प्रकाशितं भवति। माधवी करतोयायां स्नानं कृत्वा तरुणार्करागं क्षौमदुकूलं धारयन्ती वसन्तपुष्पाभरणा कनकधूस्तूरहस्ता महाकालमन्दिरं गतवती। तस्मिन् समये सा पर्याप्तपुष्पस्तवकनम्रा संचारिणी पल्लविनी लतेव दृश्यते। मध्याह्ने कदाचित् कालागुरुचन्दनतैलेन हैयङ्गवीनेन वा गात्रसम्मार्जनम्। वर्षासु च रात्रौ कपूरजलेन पुनः स्नानम्। उशीरानुलेपनं फेनकोत्सादनम्

ISSN : 2454-2881

एवं प्रकारेण माधवीसदृशानां नटीनां वेषभूषणप्रसाधनादीनां चित्रणमङ्कितं विद्यते।

एवमन्यत्रापि माधव्याः वेषभूषणप्रसाधनादीनां सुन्दरं वर्णनं प्रदीयते। स्नानान्तरं लोध्रकुसुमरेणुभिः उशीनरानुलेपनैः प्रसाधितां चन्दनचर्चितकलेवरां माधवीं सुगन्धिधुपैः केशेषु बाहुसन्धिजघनमुलयोर्वासयित्वा सुमनोज्ञं सुरभिकक्षं नयन्ति कन्यकाः[१७]।

समुल्लेखनीयं राजा प्रमुख्यानां समाजस्योच्चस्थानीयलोकानां वेषभूषणप्रसाधनादीनामपि दिग्दर्शनमत्र विद्यते। कुमारभास्करवर्मणः वर्णनप्रसङ्गे समवलोक्यते यत स्नानादनन्तरं कुमारः कालागुरुगोरोचनादिभिः तप्तकाञ्चनाभकपोलयुगलेन नितरां शोभते। शिरसि द्विफालबद्धश्चिकुरा निसर्गकृष्णत्वेन पश्यतां दृष्टिमाकर्षति। रत्नखचितो निचोलो दुकूलं स्कन्धस्थितं तस्य गात्रस्यामांसलत्वं सूचयति[१८]।

**खाद्याभासः**

नूनमेव कस्यचित् समाजस्य स्वकीयं वैशिष्ट्यं प्रकाशयति। प्रसङ्गक्रमेणात्र खाद्याभ्यासस्य वर्णनं समायाति। कुमारभास्करवर्मणा नियुक्तायाः प्रपापालिका मालतीसमीपं घटनाचक्रेण गौडाधिपतेः गुप्तचरः माधवः समायाति। तयोः चरित्राङ्कणे प्राप्यते यत् माधवः सुरापानं करोति। तथैवात्र मालत्यपि सुरापानं करोति। पानीयस्य प्रचलनमासीत्। शर्करामधुमिश्रितं तक्रम, यवासवं पानीयं समुल्लेखितमस्ति। अतिथीनां सेवार्थं गौडी, पैष्टी, माध्वी च सुराणां भेदाः प्राप्यन्ते। सुरासु गौडी स्वादुतमेति पानशौण्डैराद्रियते। मादकतायामेषा अन्याः सर्वाः सुराः अतिशेत इति युवजनैः स्वीक्रियते। पानीयेन सह भक्षितुमासीत् - ऐणेयं माँसं शूलीकृतम्। रुरुवराहगोधानपि भक्षणार्थं प्रस्तुतमासीत्। सारसो मयूरोऽपि धृतपक्कः सुवासितो विद्यते। इतोपरि भृष्टयवाः, शालीगोधूमचूर्णाः, चिपिटकाः, सुमिष्टगुडलड्डुकाः पानीयेन सह स्वीकर्तुं विद्यत्रे। एवमितोपरि कस्यचित् खाद्यस्य को गुणः तस्य वर्णनमपि प्राप्यते। तत्रोच्येते "यतो गोधा-मांसं रक्तशुक्रबलकारकमिति वैद्याः कथयन्ति[१९]।"

एवं यद्यपि सर्वेषां लोकानां न तथापि आंशिकरूपेण समाजे प्रचलितखाद्याभ्यासस्य स्फुरणं प्राप्यते।

**वाणिज्यम् -**

ग्रन्थेऽस्मिन् तदानीन्तनकामरूपे प्रचलितवाणिज्यस्य चित्रमेकं दृश्यते। करतोयया नौवाणिज्य व्यपदेशेन सांयात्रिकस्य वसुमित्रस्यागमनं भवति। चीनांशुकानां मृगनाभीनां कालागुरुप्रभृतीनां वर्णनं कृतवताऽनेन श्रेष्ठिना कलानिपुणाः युवतयः देशाद देशान्तरं नीयन्ते। पारसीकेष्वपि वक्षुनद्यां तस्य तरीर्वाह्यते इति वार्ताऽपि श्रुता। अनेन नाना-दिग्देशेभ्यः समानीता युवतयो राजान्तः पुरेषु सामन्तावरोधेषु



ISSN : 2454-2881

च प्रेष्यन्ते, एवं देवमन्दिरेष्वपि काञ्चनमूल्येन। महाकालमन्दिरेऽपि वसुमित्रेण समानीताः योषितः नृत्येन गीतेन महाकालं तोषयन्त्यो लोकानामानन्दं जनयन्ति। इदानीं वसुमित्रेण देवस्वामिन अभिलाषानुसारम् अनाघ्रातं पुष्पमिव अष्टवर्षीया गौडी कन्या माधवी समानीता। माधव्याः कैरवकोरकसन्निभं मुखं दृष्ट्वा परमाह्लादितः देवस्वामी तां महाकालवधूत्वे वृत्वा कलानिपुणां कर्तुं सङ्कल्पितोऽभवत्। वसुमित्रः देवस्वामिना माधव्या आनयनक्लेशं सार्थकतां नेतुं सुवर्णमुद्रा शतेन सम्मानीत आसीत्।

तथैव महानन्दातीरे पौण्ड्रवर्द्धने वाणिज्यस्य वर्णना प्राप्यते। सार्थवाहाः तत्र वाणिज्यार्थं दूरदेशेभ्य आगम्य वसन्ति। श्रेष्ठिचत्वरे पट्ट-दुकूलानां मृगमदानां चमरीकस्तुरीणां पूर्वदेशीयपण्यानां नित्यं क्रयविक्रयो बाहुल्येनाभवत्। महाचीनेभ्यः किन्नरवर्षेभ्यः वणिजस्तत्र समागच्छन्ति।

पुनश्चात्र क्रयविक्रयार्थं 'कार्षपणाख्या' मुद्रा तु प्रसिद्धाऽसीदेव।

**राजकोषाहरणोपायाः -**

घटनायाः कथासूत्रेणात्र राजकोषाहरणस्य प्रयोजनविषये तथैवोपायस्य विषये समुल्लेखनं विद्यते। क्षीणे कोषे प्रजासु किं करणीयं, किं वा निवेदनीयं तस्मिन् विषये सदुपदेशाः विद्यन्ते। तथैव राजेकोष संग्रहणविषये प्रसङ्गक्रमेण कौटिल्यस्य अर्थशास्त्रस्यापि वचनं समुल्लेखितं यत् 'सीताभोगो बलिः करो वणिक् नदीपालस्तरो नावः पट्टनमित्यादिकं राष्ट्रम्[२०]।'

तथैव भास्करवर्मणा नियुक्तायाः मालत्याः वर्णनात् चन्द्रपुरीविषयस्य चट्टलाख्ये ग्रामे समागतानां वणिजां वर्णनप्रसङ्गे गौडाधिपतेः करसंग्रहस्य समुल्लेखनं प्राप्यते। मगधदेशात् तरीणां पञ्चशतं, वाजिनां षट्सहस्रञ्च समानीतं वैदेशिकेन केनचित वणिजा। गौडाधिपः तेभ्यः कराधानेन राजकोषस्य पूर्णतां सम्पादितवान्। एवं प्रकारेण राज्ञां करसंग्रहणविषये दिग्दर्शनं प्राप्यते।

**नारीणां स्थानम् -**

कस्यचित् समाजस्य नारीणां स्थानं मर्यदा च समाजस्योन्नतेः मानदण्ड इव प्रतिभाति। अविनाशि इत्युपन्यासोऽपि सन्दर्भेऽस्मिन् प्रणीधानीयः। उपन्यासस्य नायिका महाकालमन्दिरस्य नृत्यपटीयसी देवदासी माधवी। तदानीन्तनसमाजे शिवालयेषु देवदासी स्वीकृताऽसीत्। आशैशवात् नृत्यगीतादिषु चतुः षष्टिकलासु सा शिक्षिता। वेदपुराणेतिहासकाव्यादिष्वपि सा सुनिपुणा जाता। शिक्षाग्रहणकाले माधव्याः युक्तिपूर्णं प्रश्नं, परमकुतुहलम्, तत्त्वान्वेषणेच्छा, जिज्ञासा, प्रत्युत्पन्नमतित्वञ्च प्रशंसनीयैव। आदिकविना सह कालिदासस्य ऋतुसंहारकाव्यस्य कतिपयानां श्लोकानां सादृश्यम्, तस्मिन् प्रसङ्गे माधव्याः कौतुहलम् - अवश्यमेव नारीणां शिक्षायाः वार्तावाहकमिति। तस्मिन् समये देवदासीषु नृत्यद्वन्द्वः समायाजितोभवत्। तत्र विजयिनी नटीमुख्या भूत्वा सर्वेषां मूर्ध्नि विराजते। माधव्याः पू

ललिता दशवर्षान् यावन्नृत्ये शिक्षिता। सा नृत्यद्वन्द्वे सर्वाः पराजित्य नटीमुख्या भूत्वा तिष्ठति। इदानीं माधव्याऽपि तत् करणीयमेव। माधव्याः वर्णनप्रसङ्गे तस्मिन् समये देवदासीनां वेषभूषणप्रसाधनादीनां वर्णनं दृष्टिपथि समायान्ति।

माधव्या : कुमारं प्रति यदविनाशि प्रेम तदेव काव्यस्य सारवस्तु। अतः माधव्याः चरित्रे संघातमयं जीवनमतिक्रम्य चिरशाश्वतद्युत्या भासते आत्मजं प्रेम।

उपन्यासेऽस्मिन् मालत्यपि वैशिष्ट्यपूर्णा गुणसम्पन्ना नारी। कुमारभास्करवर्मणा नियुक्ता जलप्रपापलिका मालती। सा खलु-धनिनां कुले जाता। परन्तु विधिवशात् सा प्रपापालिका भवति। शैशवे व्याकरणं काव्यमधीत्य नृत्यगीतादिषु सुनिपुणा जाता। सा वात्स्यायनीयं कामशास्त्रमपि पठितवती।

मालत्याः जीवनमतीव संग्रामपूर्णं दृश्यते। कार्यवशात् आयतानां निर्यातानाञ्च पण्यानां क्रयविक्रये कर्म कृतवती। घटनाक्रमेण तस्याः गौडाधिपतेः गुप्तचरेण माधवेन सह सम्मेलनमभवत्। कुमारभास्करवर्मणः प्रणिधिः भूत्वा सा छलेन माधवमात्यवशं कृत्वा माधवस्य पेटिकातः मानचित्राणि गृहीत्वा उष्णीषाभ्यन्ताराच्च सङ्केतलिपिमादाय माधवस्य वस्त्रं कौशलेन परिधाय पुरुषवेषेण दुर्गात् बहिरागच्छति। एवं प्रत्युत्पन्नमत्या मालत्या कौशलेन हस्तगतं कृतं शशाङ्कनामाङ्कितमङ्गुरीयकं दर्शयित्वा द्वारपालात् मार्गं प्राप्य तत्क्षणात् दूरं निर्गच्छति। ततः मालत्या भास्करवर्मानृपतेः सम्मुखं मानचित्रं सङ्केतलिपिं भूर्जपत्रञ्च स्थापयित्वा स्वीयकर्त्तव्यं कृतम्। सुदुष्करं कर्ममिदं दृष्ट्वाऽतीव हृष्टमनाः नृपतिः तामभिनन्दति। ततः तया मानचित्रं सङ्केतलिपिमपि राज्ञः समीपे निवेदितम्। एवं राज्ञा सा अद्य प्रभृतिः कन्यान्तः पुरे राजवरोधत्वेन सम्मानिताऽभवत्।

अतिथिशालायाः पालिकारूपेण तदानीन्तनसमये नारीणां नियुक्तिरासीत। अनङ्गमेखलाभिधा परमरूपवती शालापालिका दृश्यते याऽतीव वाक्चतुरा, मधुरवचनाऽतिथ्यनिपुणा। पान्थानां मनोरञ्जनार्थं सुमधुरवाण्या पानभोजनादिभिरातिथ्यं निवेदयति।

नद्यां तरीणां चालनेऽपि नारी नियुक्ताऽसीत्। करतोयायाः तीरे घट्टपालकन्या मदनलेखा मिल्यते या प्रायः सप्तदशवर्षीया। जन्यशून्ये स्थाने मदनलेखायाः सुमधुरं गीतं श्रुत्वा श्रमनद्वयमाश्वस्तमभवत्। आतिथ्यनिपुणायाः मदनलेखायाः सेवां लब्धवन्तौ तौ।

महाकालमन्दिरे नर्तक्य एव विजयपताकाः। महाकालं तोषयन्त्यः ताः जनैः काम्यन्ते। सांयात्रिकेन वसुमित्रेण समानीतासु देवदासीषु ललिता नृत्यगीतेषु सुदक्षा नदीमुख्यारूपेण सम्मानिता। उपन्यासेऽस्मिन् ललितायाः भूमिका तात्पर्यपूर्णा। वस्तुतस्तु नायिकायाः माधव्याः जीवनचक्रं ललितायाः मन्त्रणादेव परिवर्तितं भवति। माधव्याः जीवने करुणपरिणतेः संघटनायां ललितायाः ईषाभावः एव मूलकारणं भवति। ग्रन्थकारेण ललिताचरित्रं नारीषु साधारणतया चित्रितस्य ईषाभावस्य प्रतिमूर्तिरूपेणाङ्कितम्।

ISSN : 2454-2881

स्त्रीविषय चिरं स्थास्यति[21]।' इत्येतादृशं

अतः तस्याः मुखे- 'जीवन्त्यां ललितायां न माधवी कुमारवल्लभा

वाक्यं प्रदीयते।

तदानीन्तनकाले धर्माचरणकार्ये नूनं नारीणामपि समुल्लेखनीया भूमिकाऽसीत् कापालिकानां कवलात् पलायिता माधवी प्रव्राजिकायाः स्नेहं समाश्वसनञ्च प्राप्य लब्धप्राणा भवति। परवर्ती समये प्रव्राजिकायाः प्रोत्साहवचनं श्रुत्वैव माधवी आशां धारयन्ती जीवति। परिव्राजिका कुमारमुपगम्य निभृतं माधवीवृत्तान्तं निवेदयति।

कापालिकधर्माचरणेऽपि कापालिकी रूपेण 'क्षमा' इत्यभिधा नारी प्राप्यते। या ललितायाः कुमन्त्रणायां सहायिका भूत्वा माधवीं कापालिकानां समीपं नीतवती।

इतोपरि ग्रन्थेऽस्मिन् कतिपयानां नारीचरित्राणां भूमिका प्राप्यते, येषां भूमिका सन्दर्भेऽस्मिन् नालोच्यते। नायिकायाः सहायिकारूपेण तासां कार्यं समुल्लेखनीयमेव।

एवमत्र समाजस्य सुनिर्दिष्टस्य श्रेणीविशेषस्य जीवनपरिक्रमा चित्रीयते। अतः नारीणां पूर्णाङ्गजीवनमत्र न प्राप्यते। येषां नारीणां चरित्राणि विद्यन्ते, ताः काव्यनाटकनृत्यगीतादिषु, चतुःषष्टिकलासु सुनिपुणाः, विशेषतः देवदासीनां शिक्षाव्यवस्थाऽत्रावगम्यते। अत्र कस्यापि नारीणामानुष्ठानिकशिक्षानुष्ठानस्य नाम न विद्यते। अतः अनुमीयते तथैव वर्णनमपि विद्यते यत् गृह एव गुरुगृहे वा नारीणां शिक्षा प्रदात्ताऽसीदिति। देवदासी माधवी सन्दर्भेऽस्मिन् प्रमाणस्वरूपम्।

पुनश्च कुमारभास्करवर्मणः राजत्वकाले प्राग्ज्योतिषपुरे नारीणां सुरक्षा सर्वथा रक्षिता आसीदिति श्रमणकस्य सुचरितस्य वचनादवगम्यते यत् – "सुराजकं तद्राराष्ट्रम्। स्त्रियश्चापुरषाः सर्वालङ्कारभूषिताः निर्भया राजमार्गे रात्रौ प्रतिपद्यन्ते[22]।

सहमरणपरम्परा –

उपन्यासस्य नायिका माधवी तस्याः दयितः कुमारः प्राणैः वियुक्त इति श्रुत्वा छिन्नमूला लतेव भूमौ पतति। विगतचेतना सा महता यत्नेन लब्धचेतना भूत्वा उन्मादिनीव भवति। पुरोहितप्रमुख्यानां पौरजनानां निषेधवचनं न श्रुत्वा सर्वजनैः भृशं वार्यमाणा सा झटित्यैव कुमारस्य चिताग्नौ प्रविशति। एवं ग्रन्थस्यास्यादिभागे प्राप्यते यत् माधव्याः पितृपाद उपरते सहमृतायां मातरि तयोः पुत्री माधवी पितृव्यगृहे दुःखेन कालं नीतवती।[23] अतः अनुमीयते यत् तदानीन्तनसमाजे सहमरणपरम्परा प्रचलिताऽसीत्।

उपन्यासेऽस्मिन् तदानीन्तनसमाजव्यवस्थायाः सिद्धान्ताः प्रतिफलिताः विद्यन्ते। कुमारस्य वल्लभा महाकालमन्दिरात् समागता कलानिपुणा माधवी पट्टमहिषी भवेदिति कुमारेण निश्चितमासीत्। परन्तु नर्तकीति सा मन्त्रिभिः नानुमन्यते अतः मनसा वृताऽपि प्रकृतिक्षोभमाशङ्क्य कुमारेण सा नाभिषिक्ता पट्टमहिषीपदे। माधवीगतप्राणकुमारेण तत्स्थाने नान्याऽभिषिक्ता अत एव महाराजाधिराजः भास्करवर्मदेवः 'कुमार'

ISSN : 2454-2881

इति सुप्रसिद्धः जातः। इतोपरि पुरोहितप्रमुख्यैः पौरैः बहुशः वार्यमाणः सः। 'सहमरणं' खलु सर्वदा न विहितं शास्त्रकारैः – इत्यनेनापि[१४]।

भूशं वार्यमाणा माधवी तस्याः प्रियतमेवानुसरति। एवं प्रकारेण नायक–नायिकयोरविनाशिणः प्रेम्नः द्योतनार्थमेव ग्रन्थकारेण सहमरणपरम्पराऽत्र चित्रीयत इति वक्तुं शक्यते।

अभिनिष्पत्तिः

साहित्यं समाजस्य दर्पणस्वरूपम्। तदेव सार्थकं साहित्यं यत् कस्यापि समाजस्य लोकानां जीवनस्य प्रतिफलनं प्रकटीकरोति। अविनाश्यां तदानीन्तनसमाजस्य प्रायः सर्वाः दिशः प्रतिफलिताः परिलक्ष्यन्ते। परिशेषे निम्नोक्ताः सिद्धान्ताः द्रष्टुं शक्यन्ते–

१) ऐतिहासिकदिशःसमर्थने भास्करवर्मणः ताम्रलिपिद्वयं बाणभट्टस्य हर्षचरितञ्च प्रमाणानीति वक्तुं शक्यते।

२) सामाजिकदिशः परिक्रमायां धार्मिकशैक्षिकादयः दिशः प्रतिफलिताः विद्यन्ते।

३) सांस्कृतिकदिश अपि वैचित्रेण चित्रिताः भवन्ति।

४) समाजे नार्यः स्थितिः स्पष्टचयावगम्यते।

५) सहमरणप्रथा प्रचलिताऽसीदिति कथावस्तुनः वर्णनातः ज्ञायते।

एवं काव्यस्य प्रायः सर्वोपादानानि दृष्टिपथि समायान्ति। प्राचीनकामरूपस्य सुप्रसिद्धनृपतेः कुमारभास्करवर्मणः जीवनमवलम्वनं कृत्वा कविकल्पनाप्रसूतेऽस्मिन्नुपन्यासे नायकनायिकयोरविनाशि पवित्रमात्मजं प्रेम चित्रीयते। परिशेषे वक्तुं शक्यते यत् संस्कृतकाव्यवाङ्मये विश्वनारायणशास्त्रिण अविनाशि- इत्युपन्यासः सहृदयश्लाघनीयः परमादरणीयः ग्रन्थरूपेण चिरं स्थास्यतीति।

═══****═══

पादटीका :

१. 'असमीया उपन्यासत संस्कृतसाहित्यर प्रभाव' संस्कृतायन, पृ.–१२१

२. अविनाशि, पृ.–१३

३. डुबिताम्रलिपिः, श्लोकाः, ६८–६९

४. हर्षचरितम्, सप्तमाध्यायः, पृ. ४४५–४४८

५. अविनाशि, १३. पृ.–१५२

६. तत्रैव - २. पृ.–७

ISSN : 2454-2881

७. तत्रैव - १२. पृ.-१४४

८. हर्षचरितम्, सप्तमाध्यायः

९. वनमालवर्मदेवस्य तेजपुरताम्रलिपिः, श्लोकः-५

१०. वलवर्मन उत्तरवरविलताम्रलिपिः, श्लोकः-८

११. अविनाशि, १. पृ.-४

१२. तत्रैव - १३. पृ.-१५२

१३. तत्रैव - पृ.-१८४

१४. तत्रैव - १. पृ.-१

१५. वनमालवर्मदेवस्य तेजपुरताम्रलिपिः, पंक्तिः १३-१६

१६. अष्टवर्षा भवेत् गौरी नववर्षा तु रोहिणी, पराशरस्मृतिः, ७-४

१७. अविनाशि, ८. पृ.-९७

१८. तत्रैव - ९. पृ.-१०५

१९. तत्रैव - ७. पृ.-७४

२०. सीता भागो बलिः करो वणिक् नदीपालस्तरी नावः पट्टनं विवोतं वर्तनी रज्जुश्चौररज्जुश्च राष्ट्र (अर्थशास्त्रम्)

२१. अविनाशि, १५. पृ.-१६१

२२. तत्रैव - १०, पृ. १२८

२३. तत्रैव - १. पृ.-६

२४. तत्रैव - १९. पृ.-१८२

**सन्दर्भग्रन्थपञ्जी-**

**प्राचीनग्रन्थाः**

मनुस्मृतिः, आचार्य जगदीशलाल शास्त्री (सम्पादितः), मतीलाल बनारसीदास पाब्लिशर्स, प्रा॰ लि॰ दिल्ली,२०००

हर्षचरितम्, डॉ बालगोविन्द झा (सम्पादितः), कृष्णदास अकाडेमि, वाराणसी, २०१२

कालिकापुराणम्, आचार्य पञ्चानन तर्करत्न (सम्पादितः), नवभारत पावलिशार्स, कलिकता, २०

अर्थशास्त्रम्, वाचस्पति गैराला, चौखम्बा विद्याभवन, वाराणसी, २०१८

पराशरस्मृतिः, चौखम्बा विद्याभवन, वाराणसी, २०१८

आधुनिकग्रन्थाः

शर्मा, ड॰ मुकुन्दमाधव, Inscription of Ancient Assam, Deptt. of Publication, Gauhati University, Guwahati, 1978

शर्मा, ड॰ डिम्बेश्वर, Kamrup Sasanwali, Publication Board, Assam, Second Edition, 2003

शर्मा रेग्मी, आचार्य शेषराज, साहित्यदर्पणम्, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०१५

गोस्वामी, ड॰ मालिनी, संस्कृतायन, अलिम्पिया प्रकाशन, गुवाहाटी, २०१५

गोस्मामी, ड॰ अशोककुमार, ड० विश्वनारायणशास्त्री, जीवन आरु साधना, गरीयसी, अष्टमसंख्या, २००३

------

# भक्तिसाहित्येतिहासे हरिदेवस्य भक्तिरसतरङ्गिणी-विश्लेषणमेकम्

ड० रातुल बुजर बरुवा*

खीष्टीयनवमशतिकातः आरभ्य पञ्चदशशतिकापर्यन्तं समग्रभारतवर्षे भक्तिवादस्य प्रवाहः प्रचलित आसीत्। भारतवर्षे विविधप्रान्तेषु विविधमहापुरुषाणां प्रयासेन भक्तिसाहित्यं सु-समृद्धमभवत्। पूर्वोत्तरभारतवर्षे असमराज्येऽपि अनेके वैष्णवमहापुरुषाः भक्तिसाहित्यस्य रचनायाम् आत्मनियोगं कृतवन्तः। अस्ति असमराज्ये वैष्णवधर्मप्रवर्धकेषु श्रीशङ्करदेवमाधवदेव-दामोदरदेवादिमहापुरुषेष्वन्यतमः श्रीहरिदेवमहापुरुषः। असौ हि महापुरुषः १४२६ खीष्टाब्दे लखीमपुरजिलान्तर्गतनारायणपुर इति ग्रामे जातः। वैष्णवचूडामणिः श्रीहरिदेवः स्वकीयमतानुसारं भागवतसम्मतं वैष्णवधर्मम् असमराज्ये विस्तारितवान्। 'भक्तिरसतरङ्गिणी' इत्याख्यं काव्यं महापुरुषहरिदेवस्य विशेषनैपुण्यस्य प्रतिभूस्वरूपम्।

वैष्णवधर्मप्रचाराय श्रीहरिदेवेन भक्तिरसतरङ्गिणी विरचिता। स्तवकाभिधेयेषु त्रयोदशसंख्यकेषु अध्यायेषु विभक्तो ग्रन्थोऽयम्। १०९१ श्लोकात्मके ग्रन्थेऽस्मिन् हरिदेवेन संस्कृतश्लोकान प्राचीनासमीयाभाषायां गद्यानुवादः कृतः। काव्यस्य मंगलाचरणे एकादशसंख्यकेषु श्लोकेषु भगवतः श्रीकृष्णस्य स्तुतिर्दृश्यते -

वन्दे नवघनश्यामं पीतकौषेयवाससम्।
सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम्॥
नमस्ते वासुदेवाय सर्वभूतक्षयाय च।
हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥[१]

महापुरुषेण शास्त्रसन्मतं गभीरभक्तितत्वम् अनायासेन भक्तानां कृते नेतुं ग्रन्थोऽयं विरचितः इति काव्यस्य प्रारम्भे हरिदेवेन घोषितम् -

लिख्यते चातियत्नेन श्रीहरिदेवशर्मणा।
भक्तानां सुखबोधाय भक्तिरसतरङ्गिणी ॥[२]

*सहाचार्यः, संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः, नलबारी

काव्यस्यास्य वर्ण्यविषयाः भागवतपुराण-पद्मपुराण-हरिभक्तिविलास-भक्तिरसामृतसिन्धु-कल्किपुराणादिभ्यः ग्रन्थेभ्यः संगृहीताः वर्तन्ते। स्थाने स्थाने वैष्णवधर्मप्रचारकस्य हरिदेवस्य बहुस्वरचितश्लोकाः प्राप्यन्ते। यद्यपि ग्रन्थस्य नाम भक्तिरसतरङ्गिणी कृता तथापि प्रत्येकस्तवकानाम् अन्तिमे 'भक्तिरसप्रवाहिणी' इत्येवं हरिदेवस्य कृतेः समुल्लेखोऽस्ति-- ''इति श्रीअजनाभात्मजहरिदेवशर्मणा निर्मित-भक्तिरसप्रवाहिण्यां त्रयोदशस्तवकः''[३]। ग्रन्थस्य प्रथमचतुष्टये स्तवके श्रीमद्भागवतपुराणस्य माहात्म्यं श्रेष्ठत्वञ्च प्रतिपादितम। भागवतपुराणे भागवतमाहात्म्यं वर्णनावसरे उक्तमस्ति यत् यावत् पर्यन्तं अमृतमयभागवतस्य वृत्तान्तं श्रुतिगोचरं न भवति तावदेव साधुसमाजे अन्यपुराणानां गुरुत्वं वर्तते-

राजन्ते तावदन्यानि पुराणानि सतां गणे।
यावत् भागवतं नैव श्रूयतेऽमृतसागरम्।[४]

श्रीहरिदेवेन उच्यते यत् श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा-

श्रीमद्भागवतं तत्र गरीयो भुवि सङ्गतम्।
श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा॥[५]

हरिदेवेन प्रथमे स्तवके चतुष्टये भक्तिमार्गस्य क्रमविकाशः भारतवर्षस्य विविधेषु प्रान्तेषु भक्तिवादस्य जागरणादिविषयाः समुपस्थापिताः। पुराणमिव अत्र सूत-नारद-उद्धव-शैनाकादीनां कथोपकथनेन वर्ण्यविषयाः उपस्थापिताः सन्ति। हरिदेवेन स्वरचितश्लोकेषु अनुष्टुप्-इन्द्रवज्रा-शार्दूलविक्रीडितछन्दसां प्रयोगः कृतः।

काव्यस्य पञ्चमे स्तवके भक्तियोगः परमेश्वरभजनसम्बन्धः वा सन्निविष्टः, षष्ठे सृष्टिवर्णनम्, सप्तमे क्रियायोगस्य तत्वम्, अष्टमे विष्णोः पूजायाः फलम्, नवमे विष्णोः पूजायाः पद्धतयः, दशमे हरिमाहात्म्यवर्णनम्, एकादशे हरेः पुराणरूपस्य वर्णनम्, द्वादशे विष्णोः भजनमाहात्म्यम्, त्रयोदशे कलियुगस्य विवरणञ्च प्राप्यते। समुचितशब्दप्रयोगेन यथार्थभावप्रकाशे हरिदेवः सिद्धहस्त आसीत्। दीर्घसमासयुक्तानां दीर्घसन्धियुक्तानाञ्च शब्दानां समावेशः काव्येऽस्मिन् न दृश्यते।

पुराणसूर्यरूपस्य महाभागवतपुराणस्य मासेन सप्ताहेन वा श्रवणमात्रेण मनुष्यः भगवद्भक्तिनिष्ठः सन् मुक्तिभाजनतामुपयाति-

मासेन भक्तिराध्यसं लभते द्विजसत्तम।
सप्ताहेन श्रुतञ्चैतत् सर्वथा मुक्तिदायकम्॥[६]

साधारणजनः अस्य पुराणस्याधिकारी भवितुं नार्हति, पुराणेऽस्मिन् बहुविद्यानां सन्निवेशत्वात्।

दशमे स्तवके हरेः माहात्म्यप्रकाशकाः अष्टनवतिसंख्यकाः श्लोकाः सन्ति। ग्रन्थकारानुसारेण भक्तानां कृते हरिनामकीर्त्तनात् व्यतिरिच्य नास्ति किमपि श्रेष्ठम्। ये खलु भक्ताः श्रीहरिमाश्रित्य संसारे


ISSN : 2454-2881

तिष्ठन्ति तेषां कृते जपस्य प्रयोजनं नास्ति। ये मूर्ध्नि विष्णुपादजलं धारणं कुर्वन्ति तेषां कृते स्नानस्य प्रयोजनं नास्ति-

किं जपैः श्रीहरेर्नाम गृहीतं यदि मानुषैः।
हरिभक्तिसुधां पीत्वा उल्लङ्घ्या भवति द्विजः॥[७]

श्रीहरेः पादपद्मं येन हृदि धृतं तस्य कृते यज्ञसम्पादनं निरर्थकमेव-

किं स्नानैर्विष्णुपादाम्भो मस्तके येन धार्यते।
किं यज्ञेन हरेः पादपद्मं येन धृतं हृदि॥[८]

मुक्तिलाभाय श्रीहरेः स्मरणं सर्वदा अनिवार्यम्। हरिनामश्रवणकीर्तनेन मानवः सुपवित्रो भवति, महापापिनां चापि पूर्णप्रायश्चित्तं जायते, समस्तपापादिकं च विनष्टं सम्भवति। विष्णुपुराणे उक्तमस्ति-

''कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।
प्रायचित्तं तु तस्यैकं कृष्णानुस्मरणं परम्॥''[९]

हरिभक्तिं विना नृणां जन्म वृथा इति भक्तिरसतरङ्गिण्यां प्रकीर्तितम्-

हरौ भक्तिं विना नृणां वृथा जन्म प्रकीर्तितम्।
ब्रह्मादयः सुरा यस्य यजन्ते प्रीतिहेतवे॥[१०]

ग्रन्थस्य त्रयोदशस्तवके कलेः प्रभावात् विनाशं प्राप्तं ज्ञान-वैराग्य-भक्तिश्च पुनरुज्जीवितं कृत्वा मुक्तिं प्राप्तुं नारदः भक्तान् उपदिशति। कलियुगे कीदृशः सदाचारः पालनीय इत्यस्मिन् विषये आलोचनम् अत्र प्राप्यते। अत्र कथ्यते यत् भगवतः नामगुणादीनां श्रवणकीर्त्तनमूलकः भक्तिभाव एव कलियुगस्य सर्वश्रेष्ठो धर्मोऽस्ति। विशेषतः कलियुगे कलुषितविषयनिमग्नानां सर्वेषां सन्तारकमुत्तमोत्तमं साधनं तावत् श्रीभगवन्नामसंकीर्त्तनमेव। श्रीमद्भागवतम्, विष्णुपुराणमित्यादिपुराणेष्वपि नामसंकीर्त्तनस्य माहात्म्यं प्रकटितम्। भगवत्प्राप्तेः साधनानि शास्त्रेषु ज्ञानकर्मयोगभक्तिरूपेण चतुर्विधानि निर्दिष्टानि भवन्ति परन्तु एतेषु भक्तिरेव सुलभा अस्ति। यतो हि भगवान् भक्तिमाध्यमेन प्राप्तुं शक्यते, न तु ज्ञानकर्मादिभिः-

न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा।
हरिर्हि साध्यते भकत्या प्रमाणं तत्र गोपिकाः॥[११]

अनया भक्त्या भक्तः साक्षात् भगवन्तं प्राप्य परमानन्दपरिपूर्णः जायते। सत्यादित्रियुगे ज्ञान वैराग्यश्च मुक्तेः परमसाधकत्वेन, कलियुगे केवलं भक्तिरेव ब्रह्मसायुज्यकारिणी परिगणिता भवति तदुक्तं भक्तिरसतरङ्गिण्याम्-

सत्यादित्रियुगे बोधो विरागो मुक्तिसाधकौ।
कलौ तु केवल भक्तिब्रह्मसायुज्यकारिणी॥[१२]

साधकः भक्तेः प्रभावेन भगवन्तं साक्षात्कृत्य आत्मज्ञानमधिगम्य मुक्तिं प्राप्तुं शक्नोति।

ग्रन्थस्य द्वितीये स्तवके भक्तेः द्वेषिणां गतिविषये वर्णनावसरे उक्तमस्ति यत् रजोगुणवशादेव भक्तिरहितजनः कर्मासक्तो भवति। तदा कामक्रोधदम्भाहंकारादीनां वृद्धिः जायते। ये खलु भक्तिविरोधिनः सन्ति ते जगत्त्रये विपदग्रस्ताः भवन्ति–

कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः।
भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये॥[१३]

गीता–भागवतपुराणप्रभृतिषु भिन्नशास्त्रेषु नवविधा भक्तिः स्वीकृताऽस्ति। ब्रह्मवैवर्तपुराणेऽपि नवलक्षणा भक्तिः समुल्लिखिता–

स्मरणं कीर्त्तनं नामगुणयोः श्रवणं जपः।
रच्चारुरूपध्यानं त्वत्पादसेवाभिवन्दनम्।
समर्पणं चात्मनश्च नित्यं नैवद्यभोजनम्।
वरं वरेश देहीदं नवधा भक्तिलक्षणम्॥[१४]

यद्यपि नवविधाभक्तिः आपाततः भिन्ना एव परिदृश्यते, वस्तुतः एका हि अपरयाः परिपूरका। महापुरुषहरिदेवेनापि तस्य भक्तिरसतरङ्गिण्यां एतदेव अनुरूपं प्रकाश्यति।

हरिदेवः 'कृष्णैक ईश्वर' इति मतं निधाय एव अद्वैतवादस्य समर्थनं कृतवान्। श्रीकृष्णे शरणमेव मोक्षप्राप्तेः साधनम्। भक्तिरसतरङ्गिण्यां तेन स्पष्टीक्रियते–

हरिरेव समाराध्यः सर्वदेवेश्वरेश्वरः।
हरिनाममहामन्त्रैर्नश्येत् पापपिशाशकः॥[१५]

गीतायामपि श्रीकृष्णः स्वयं घोषयति–

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥[१६]

निरन्तरभागवतपाठेन गृहस्थस्य निवासस्थानं तीर्थवत् भवति इति द्वितीये स्तवके उल्लिखितम्–

कथा भागवतस्यापि नित्यं भवति यद् गृहे।
तद् गृहं तीर्थरूपं हि नृणां पापविनाशनम्॥[१७]

द्वितीये स्तवके भागवतमाहात्म्यप्रतिपादनावसरे श्रीहरिदेवेन भक्तेर्हि माहात्म्यमुद्घोषितम्। संसारेऽस्मिन् मनुष्याः स्वरूपं विस्मृत्य सांसारिकविषयेष्वासक्ताः इतस्ततः भ्रमित्वा समयं यापयन्ति। यदि भाग्यवशात् भगवत्कृपां प्राप्नोति तर्हि स्वरूपं ज्ञात्वा भगवन्तं प्राप्तुं यतते। एवं भूतं मानवशरीरं प्राप्य यो निरन्तरं भगवच्चरणचिन्तनपरायणः सन् संसारसागरादात्मानमुद्धर्त्तुं न प्रयतते, तस्य जीवनमसफलमेव।

ISSN : 2454-2881

अनेन ग्रन्थाध्ययनेन साधारणजनानां अल्पधीनाञ्च भक्तिधर्मस्य गूढ़तत्त्वविषये संशयो दूरीभू भविष्यति। सर्वभारतीयभक्तिजागरणं प्रति ग्रन्थस्यास्य महत्वपूर्णम् अवदानमस्ति। वैष्णवसाहि धर्मदर्शनदिशा ग्रन्थोऽयं दिग्दर्शनमूलक-रूपेण स्वीकृतोऽस्ति।

पादटीका :

१. भक्तिरसतरङ्गिणी (भ.त), पृ.१-२

२. उक्तग्रन्थः, पृ.२

३. उक्तग्रन्थः, पृ. १७८

४. भागवतपुराणम्, १२.१३.२४

५. भ.त., १.१५

६. उक्तग्रन्थः, १.१९

७. उक्तग्रन्थः, १०.८

८. उक्तग्रन्थः, १०.९

९. विष्णुपुराणम्, ११.६.३६

१०. भ.त., १०.४३

११. उक्तग्रन्थः, ११.१४

१२. उक्तग्रन्थः, २.५

१३. उक्तग्रन्थः, २.२०

१४. ब्रह्मपुराणम्, १.६.१५-१६

१५. भ.त., १२.५

१६. गीता, २.११

१७. भ.त., २.३०

******

# श्रीमतो माधवदेवस्य नामघोषाया आत्मोपदेशवैचित्र्यम्- एकं विश्लेषणम्

ड० विभूतिलोचन शर्मा*

आत्मनः प्रकृतज्ञानाभावात् हि जगति समस्या नित्यप्रवर्धमाना दृश्यन्ते। शरीरमनसो भेदः इन्द्रियाणां कर्मवैचित्र्यम्, विषयाशक्तिः, अहंकारस्य स्वरूपं, बुद्धेः कार्यं, चित्तस्य स्थिति इत्येतेषां प्रकृतज्ञानाभावात् हि इहजगति जनानां मानसिकशान्तिः क्षीयमाणा लक्ष्यते। भौतिकजगतो वर्णमयजालैः आकुलितससारस्य स्थितिर्भयावहा। अर्थनैतिकस्थितेः शिखरारोहनलिप्सया राजनैतिकसामन्तवादस्य प्रसारतड़णया च जनजीवनप्रमूल्यस्य चिन्ता भूलुण्ठिता। अर्थनैतिकासमतायाः करालग्रासे ग्रसितस्य समाजस्य हितचिन्तकानां कर्मोद्यमः ध्वस्तः। सन्त्रासवादस्य रक्तिमनेत्रैर्जनजीवनं सन्त्रस्तम्। भौतिकसुखोपलब्धिर्हि जीवनलक्ष्यमिति विचारधारया एव भाराक्रान्ता समाजव्यवस्था। कालोऽयं न केवलं भौतिकसुखप्राप्तये आत्मनियोजनार्थं प्रत्युत आध्यात्मिकसुखप्राप्तिपूर्वकं जीवनलक्ष्योपलब्ध्यर्थञ्च व्यवस्थितमिति वैष्णवसाहित्योपलब्धविचारैर्ज्ञायते। विशेषतः श्रीमतो माधवदेवस्य नामघोषायाः आत्मोपदेशपरिखण्डे निहितस्य आत्मतत्त्वविश्लेषणस्य कश्चिद् पृथगेव वैचित्र्यम् परिलक्ष्यते। अस्मदालोचने श्रीमतो माधवदेवस्य आत्मादिविषयस्य आध्यात्मिकचिन्तनस्य सरलाभिव्यक्तिः विश्लेषयिष्यते। प्रसङ्गक्रमेण कर्णनासिकादीन्द्रियाणां बुद्धिरहंकारचित्तादीनां स्थितिः नामघोषायाम् इतरशास्त्रादिषु कथं प्रदर्शिता तस्यापि तुलना विधाष्यते।

शरीरमेव मुलभूततत्त्वमिति विचारेणाकुलिता जना एव धरातलेऽस्मिन् अधिकाः। फलतः चक्षुकर्णजिह्वानासिकात्वचां विषयेषु अत्याशक्तिः नित्यप्रवर्धमाना दृश्यते। इन्द्रियाणि स्व स्व विषयान् भोक्तुं प्रवर्तन्ते एव। तान् च विषयान् भोक्तुः मनः प्रेरयति। विषयाणाम् अतिशयभोगार्थं मानसिकी लिप्सा वर्धते निरन्तरम्। मनसः उपरि यद्यपि बुद्धितत्त्वं वर्तते तथापि इष्टानिष्टविपत्तिव्यवसायसंशयादिगुणात्मिकायाः बुद्धेः क्रिया सर्वत्र। तस्मात् विषयेषु अत्याशक्ते

*सहकारी अध्यापकः, असमीयाविभागः, बडोलेण्ड विश्वविद्यालयः

नियन्त्रणमपि दुष्करम् एव। बुद्धिक्षयकराः बुद्धिनाशस्य हेतवश्च उक्ताः कालिकापुराणे यथा -

"शोकः क्रोधश्च लोभश्च कामो मोहः परासुता।
ईर्ष्या मानो विचिकित्सा कृपासूया जुगुप्सता।।
द्वादशैते बुद्धिनाशहेतवो मानसा मलाः।"
नानापराधानामपि मूलमिति नेत्युक्तिः।।[१]

बुद्धिनाशस्य कारणात् विश्वेस्मिन् अपराधा वर्धन्ते निरन्तरम्। सम्प्रति हि विश्वीयसन्त्रासवादस्य परिघटनायाः संख्या भयावहा। गतवर्षे (मै २०२१) सन्त्रासवादस्य परिघटना अष्टत्रिंशदधिकचतुश्शताधिकव्यशीतिअधिकैकलक्षं (१८२४३८)।[२] न केवलं अधुनातनकाले रामायणमहाभारतादिकालेऽपि पुत्रमोहार्थलीप्सा-सिंहासनलोभादि-कारणसम्भूतत्रासाः लक्ष्यन्ते एव। इन्द्रीयाणां विषयेषु अनुकुलातानुसारं प्रतिकुलतानुसारं च रागद्वेषौ व्यवस्थितौ स्तः। रागद्वेषाभिभूता ये कर्म कुर्वन्ति तेषां प्रकृतिः अशुद्धा भवति। विषयानुकुल्यादाशक्तिः प्रतिकुल्याच्च क्रोधः उत्पद्यते; इत्युभयेभ्यः अपराधाः सम्पद्यन्ते। उक्तं च गीतायां -

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ
तयोर्न वशमागच्छेत्तौ ह्यास्य परिपन्थिनौ।।[३]

विषयाशक्तानि च इन्द्रियाणि ज्ञानेन एव नियन्त्रयितुं शक्यानि। यदुक्तं मनुसंहितायाम्-

न तथैतानि शक्यन्ते संनियन्तुमसेवया।
विषयेषु प्रयुक्तानि यथा ज्ञानेन नित्यश।।[४]

अस्य जगतो मायामयत्वं जड़त्वं वा सामान्यमनुष्या न जानन्ति, इन्द्रियाणां च प्रकृतज्ञानं प्राप्तुं नास्त्यवसरः सौविध्यं वा तेषाम्। एतादृशानां समस्यानां परिहाराय हरेर्नाम एव मुख्यभूतमौषधमिति माधवदेवस्य नामघोषायां निहितपदेशेभ्यः ज्ञायते। जनाः चैतन्यरूपं शुद्धात्मानं कृष्णं व्याधिरूपदुर्घोरसंसारस्य औषधरूपं हरिनाम वा परित्यज्य जड़मेव भजन्ते इति माधवदेवस्यानुभवः। यदुच्यते नामघोषायाम् -

**माया आदि करि यत समस्ते जगत जड़**
**कृष्णेसे चैतन्य आत्मा शुद्ध।**
**चैतन्य कृष्णाक एड़ि जड़क भजिया मरे**
**किनो लोक अधम मुगुध।।४७।।**
**दुर्घोर संसार इटो ब्याधिर औषध महा**
**तेजि हरि नामक सम्प्रति।५०।[५]**

मुमुक्षुजनाः अविद्याजनितसुखेभ्यः यदा विरक्ता भवन्ति तदा ते आत्माविषये एव रमन्ति। तेषां

ISSN : 2454-2881

विधिरूपकिङ्करात् परित्राणं च भवति इति चोक्तं नामघोषायां-

मुमुक्षुजनर येवे अविद्याजनितसुखे
विरकति भैल आतिशय।
केवले आत्मात मात्र सदाय रमण करे
तेवे विधिकिङ्कर गुचय।।१२५।।[६]

इन्द्रियाणां मध्ये जिह्वादीनां कार्येऽपि हरेर्नाम संयुक्तं माधवदेवेन। जिह्वां स्म्बुध्य तेनोक्तम्-

हे जिह्वा तोर मधुरेसे मात्र प्रिय
जान तजि रसर सारक।
आन तेजि निरन्तरे करियोक मात्र पान
नारायण नाम अमृतक।।८९।।[७]

इह जिह्वाया मधुरप्रियत्वं, रससात्वं प्रोच्य अन्यं च परित्यज्य नारायणनामामृतं पातुमुपदेशो विहितः। माधवदासस्य आक्षेपः अपि जिह्वाया कर्मविषयेलक्ष्यते। तन्मतसंसारसागरस्य सन्तरणोऽपायः सुदृढ़ नौका सदृशः हरनामैव। अतः जिह्वाग्रे हरेर्नाम रामनाम वा स्यादिति तस्याग्रहः। अतः कथोपकथनव्याजेन आक्षेपपूर्वकं जिह्वायाः कर्मोपदेशोऽपि कृतः माधवदासेन-

हे जिह्वा तजि सदा आत्मात निर्दय भैलि
केन नोवोलस राम वाणी
संसारसागरे इटो हरिसे सुदृढ़ नाव
जानि हरि वुलियो कल्याणी।।९०।।[८]

यथा चोक्तं पाण्डवीगीतायाम्-

हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये।
नारायणाख्यममृतं पिव जिह्वे निरन्तरम्।।
हे जिह्वे मयि निःस्नेहे हरिं किं त्वं न भाषसे।
हरीति वद कल्याणि संसारार्णवनौ हरिः।।[९]

तथैव कर्णविषयेऽपि कृष्णानामश्रवणकार्यमुक्तं नामघोषायाः आत्मोपदेशपरिखण्डे -

हे कर्ण सदा तोर शब्द मात्रसे प्रिय तजि शब्द मधुर जानस।
कोटि अमृततोधिक परममधुर शब्द शुन सदा कृष्ण नाम यश।।९१।।[१०]

अमृततोधिकमधुरस्य कृष्णशब्दस्य श्रवणेन अमृतपाणादधिकमानन्दं लभेदिति विचार्य च कर्णाय अयमुपदेशः माधवदासेन कृतः। किमर्थं च तस्य श्रवणमावश्यकमिति जिज्ञासायाम् आदौ एव उक्तं

ISSN : 2454-2881

नामघोषायाम् -

कर्णपथे भकतर हियात प्रवेशि हरि दुर्वासना हरे समस्तय।

जलर यतेक मल येहेन शरतकाले स्वभावते निर्मल करय।।२५।।[११]

अत्रायमाशयः हरेर्नाम कर्णमार्गेण हृदयं प्रविश्य सर्वा दुर्वासनाः हरति। यथा शरत्कालो मलमयजलं मलविहीनं करोति तथैव जनानां हृदयस्य मलं कृष्णनामप्रवेशात् निर्मलं भवति।

मनसः सङ्कल्पः कृष्णानाममयो भवेदिति च तत्रैव नामघोषायाम् उपन्यस्तम्-

**हे मन तोर काम सङ्कल्प विकल्प धर्म तेजि मिछा कामना सकल।**

**सदाये सङ्कल्प मात्र करियो सुहृद मन कृष्णनाम परम मङ्गल।।९२।।**[१२]

समनन्तरं हृदयबुद्धिरहंकारानां कृतेऽपि परमेश्वरविषयकं ज्ञानं कथोपकथनव्याजेन प्रस्तुतं नामघोषायाः आत्मोपदेशखण्डेन -

**शुनिओ हृदय हेर ब्रह्माण्डभितरे यत बस्तु आछे तोक नोजोड़य।**

**ताक तेजि कृष्णनाम अक्षय अमृत पिया सन्तोषक लभियो हृदय।। ।।**

**शुनियोक बुद्धि तोर केवले निश्चय धर्म तेजि सव विनाशी विषय।**

**सदा शुद्ध सुमङ्गल अक्षयकृष्णर नाम ताके मात्र करियो निश्चय।। ।।**

**शुन हेर अहंकार निचिन्त आपुन मार मिछा अहम्ममक तेजिओ।**

**परम इश्वर कृष्ण हुयोक ताहान दास साधुसङ्गे कृष्णाक भजिओ।।९३-९५।।**[१३]

हृदयं बुद्धिम् अहंकारं च सम्बुध्य इहोच्यते – हे हृदय। श्रुणुः समस्तब्रह्माण्डे यावन्ति बस्तुनि सन्ति तानि तव कृते स्वल्पानि एव भाति। तानि सर्वाणि परित्यज्य कृष्णानामामृतं पिव सन्तोषं च लभ। हे बुद्धि! विनाशकारकं विषयं परित्यज्य परमशुद्दे सुमङ्गले अक्षये परमेश्वररूपे कृष्णे आत्मानं निवेशय। हे अहंकार! त्वम् आत्मविनाशं न चिन्तय। मिथ्यायामनित्यविषये अहम्मभावं परित्यज। त्वं परमेश्वरस्य कृष्णस्य दासो भव, साधुभिः सह कृष्णं भज।

तथैव मुकुन्दमालायां जिह्वाचित्तपाणिश्रोत्रलोचनपादनासिकाशिराणां स्वस्वविषये कृष्णविषयः प्राधान्येन ग्रहीतव्यः इत्युक्तम् यथा -

**जिह्वे! कीर्तय केशवं मुररिपुं चेतो! भज श्रीधरं पाणिद्वन्द्व!**

**समर्च्चयाच्युतकथां श्रोत्रद्वय! त्वं शृणु। कृष्णं लोकय लोचनद्वय!**

**हरेर्गच्छाङ्घ्रियुग्मालयं जिग्घ्र घ्राण मुकुन्दतुलसीं मूर्धन्नमाधोक्षजम्।।**[१४]

ISSN : 2454-2881

अस्यायमर्थः समुल्लसति – हे जिह्वे! त्वं केशवं कीर्तय, हे चेत! त्वं मुरनाकस्यासुरस्य हन्तारं केशवं चिन्तय। हे हस्तद्वय! श्रीधरं भज। हे श्रोत्रद्वय! अच्युतकथां शृणु। हे लोचनद्वयम्! कृष्णं पश्य। हे पादद्वयम्! हरेरालयं गच्छ। हे नासिके! कृष्णार्पिततुलसीपत्रस्य घ्राणं नय। हे शिर! अधोक्षजस्य विष्णोः समीपं अवनतो भव।

संसारेऽस्मिन् यावन्त अनर्थाः सन्ति तेषां समुत्पत्तिः त्रिभ्यः स्थानेभ्यो भवन्ति। काम-क्रोध-लोभानां कारणतः सर्वे अनर्थाः सम्भवन्ति इति विज्ञाय तेषां परित्यागपूर्वकं कृष्णाभक्तिः एव साररूपेण ग्रहणीयः। इमे कामक्रोधलोभाः आत्मनाशनहेतवो नरकस्य द्वाराणि चेति प्रोक्तं नामघोषायाम् माधवेन। यथोक्त -

**यतेक अनर्थ आछे संसारत ताते तिनि विध सार।**
**काम क्रोध लोभ आपुन नाशन जानि करा परिहार।।२०८।।**
**आत्मनाश हेतु कामक्रोधलोभ नरकर तिनि द्वार।**
**जानि ताक तेजि केवले कृष्णर भकतिक करा सार।।२०९।।**[१५]

अस्यायमर्थः- संसारेऽस्मिन् यावन्तः अनर्थाः सन्ति ते प्राधान्येन साररुपेण वा त्रिधात्मिकाः। ते कामक्रोधलोभा स्वविनाशका इति विज्ञाय परिहर्तव्याः। इमे च कामक्रोधलोभा आत्मनाशहेतवः नरकस्य त्रिणि द्वाराणि चेति विज्ञाय तान् परित्यज्य साररूपेण कृष्णभक्तिरेव करणीयः।

कृष्णस्य भक्तिकरणेन को लाभः इत्यत्र चोक्तम्

यिटोजने शुद्धभावे **हरितशरण** लैया हरिक सुहृद बुलि आछे।
हरिर प्रसादे सिटो **बिघ्निर मुण्डत भरि दिया हरि गुण गाया नाचे।।६।।**[१६]

यः शुद्धरूपेण आत्मानं हरें शरणं सुहृदं च मत्वा तिष्ठति तस्य हरिप्रसादेन अमङ्गलं न भवतीति अस्य पदस्याशयः।

ये मुक्तावपि निस्पृहा तेषामिहजगति कस्मिन् विषये मतिः रतिर्वा स्यादिति संशये वक्तुं शक्यते कृष्णाभक्ता भक्तिविषये एव रतिमन्ता मतिमन्ता वा भवन्ति। यस्य नाममात्रेण पापीनामपि भवसिन्धुतरणं भवति तस्य सदानन्दमयस्य सनातनस्य कृष्णस्य उपासना हृदि सर्वथा कृष्णभक्ताः कुर्वन्तीति नामघोषायामादौ उक्तम् -

**मुक्तितो निस्पृह यिटो सेहि भकतक नमो रसमय मागोहो भकति।**
**समस्तमस्तक मणि निज भकतर वैश्य भजो हेन देव यदुपतिः।।**
**यार राम कृष्ण नाम नावे भवसिन्धु तरि पावे परम्पद पापी यत।**
**सदानन्द सनातन हेनय कृष्णक सदा उपासना करोहो हृदयत।।१-२।।**[१७]

भक्तिरत्नावल्यां च तथैवोक्तम् -

ये मुक्तावपि निस्पृहः प्रतिपदप्रोन्मिलदानन्ददाम्।
यामास्थाय समस्तमस्तकमणिं कुर्वन्ति यं स्वे वंशे।।
तान् भक्तानपि ताञ्च भक्तिमपि तं भक्तिप्रियं श्रीहरिम् ।
वन्दे सन्ततमर्थयेऽनुदिवसं नित्यं शरण्यं भजे।।[१८]

ज्ञानालयं चित्तं सम्बुध्य परमरहस्यरूपा वाणी उक्ता माधवदासेन -
शुनियोक चित्त हरे परमरहस्य वाणी तुमि शुद्ध ज्ञानर आलय।
कृष्ण नित्य शुद्ध बुद्ध परम ईश्वर दाव नछारिवा ताहान आश्रय।।
कृष्ण निज इष्टदेव आत्मा प्रियतम गुरु सुहृद सोदर बन्धु जन।
कृष्णो मोर मति गति कृष्णत भकति रतिकृष्णपावे निमजोक मन।।९६-९७।।[१९]
इह हि कृष्णस्य शुद्धत्वं, बुद्धत्वं, ईश्वरत्वं, परमाश्रयत्वं, ईष्टदेवत्वं, सुहृदत्वं, बन्धुत्वं, मतित्वं, गतित्वं, रतित्वं आत्मरूपत्वम् च विस्तरमुपन्यस्तमिति शम्।

सन्दर्भसूत्रनिर्देशा:

१. शब्दकल्पद्रुमः (खण्ड-३, पृ. ४३५)
२. http://en.wikipedia.org/wiki/Global Terrorism Database
३. श्रीमद्भगवद्गीता - ३/३४
४. मनुसंहिता - २/९६
५. नामघोषा, पदसंख्या - ४७-५०
६. तत्रैव, पदसंख्या - १२५
७. तत्रैव, पदसंख्या - ८९
८. तत्रैव, पदसंख्या - ९०
९. महापुरुष माधवदेव वाक्यामृत - पृ.- ४३९
१०. नामघोषा, पदसंख्या - ९१
११. तत्रैव, पदसंख्या - ९५
१२. तत्रैव, पदसंख्या - ९२

ISSN : 2454-2881

## स्रोथिका

१३. तत्रैव, पदसंख्या - ९३-९५
१४. शब्दकल्पद्रुमः (खण्ड-२, पृ. ५३५)
१५. नामघोषा, पदसंख्या - २०८-२०९
१६. नामघोषा, पदसंख्या - ६
१७. तत्रैव, पदसंख्या - १-२
१८. भक्तिरत्नावली-कान्तिमाला टिका-मङ्गलाचरणम्
१९. नामघोषा, पदसंख्या-९६-९७

## ग्रन्थपञ्जी


गोस्वामी, नारायण चन्द्र, सम्पा, नाम-घोषा आरु कीर्तन-घोषा द्वितीय प्रकाशन, ष्टुडेन्ट ष्ट'रच, कलेज होष्टेल रोड, गुवाहाटी, असम, २००१.

त्रिपाठी, कृष्णमणि, सम्पा. भक्तिरत्नावली डाइरेक्टर, रिचर्च इन्स्टिटिउट, वाराणसीय संस्कृत विश्वविद्यालयः, १८९० शकाब्दः .

देव, राजा राधाकान्त, शब्दकल्पद्रुमः (१-५) खण्ड) प्रो. वेम्पटि कुदुम्ब शास्त्री, कुलपति, राष्ट्रिय संस्कृत संस्थान, इन्स्टीट्युशनेल एरिया, जनकपुरी, नई दिल्ली, २००६.

हरिप्रसाद, हाजरिका, सम्पा. महापुरुष माधवदेवर वाक्यामृत, श्रीमन्त शंकरदेव संघ, नगाव, असम, २००९.

# वक्रोक्तिजीवितसम्मतं काव्यस्वरूपम्

डा. कमल लोचन आत्रेयः*

काव्यं नाम कवेः कृतिः कविकर्म वा। संस्कृतसाहित्यजगति विविधैः प्राचीनार्वाचीनालंकारिकैः काव्यस्वरूपविषये स्वमतानि सम्प्रदत्तानि वर्तन्ते। तेष्वालंकारिकेषु कुन्तकोऽस्त्यन्यतमः। संस्कृतालंकारशास्त्रेतिहासे ये षट्सम्प्रदायाः सन्ति तेषु वक्रोक्तिसम्प्रदायस्य प्रमुखाचार्योऽस्ति राजानककुन्तकः। तस्य 'वक्रोक्तिजीवितम्' इति ग्रन्थः संस्कृतसाहित्ये उल्लेखयोग्यः काव्यशास्त्रीयग्रन्थोऽस्ति। कुन्तकविरचिते वक्रोक्तिजीवितग्रन्थे प्रथमोन्मेषे काव्यस्वरूपमेवं प्रदीयते -

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[1]

अस्य सरलार्थो यथा- वक्रकविव्यापारयुक्ते काव्यतत्त्वविदानन्ददकारिणि बन्धे अवस्थितौ सहभावेन युक्तौ शब्दार्थौ काव्यमिति। बन्धो वाक्यविन्यासः रचना वा। कीदृशे बन्धे- वक्रकविव्यापारशालिनि तद्विदाहलादकारिणि च। वक्रो योऽसौ कविव्यापारः, तेन शालते श्लाघते यः, तस्मिन् - वक्रकविव्यापारशालिनि। तत्र वक्रस्य वक्रताया वाशयं स्पष्टयन्नुच्यते – 'वक्रो योऽसौ शास्त्रादिप्रसिद्ध-शब्दार्थोपनिबन्धनव्यतिरेकी षट्प्रकारकवक्रताविशिष्टः'[2]। तद्यथा – वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, प्रत्ययाश्रयवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रवन्धवक्रता चेति। पुनः कीदृशे – तद्विदाह्लादकारिणि। तत् काव्यतत्त्वं विदन्ति जानन्तीति तद्विदः, तेषामाहलादमानन्दं जनयति यः, तस्मिन् - तद्विदाह्लादकारिणि। एवंभूते बन्धे सहभावेन व्यवस्थितौ शब्दार्थौ काव्यमित्यर्थः।

शब्दार्थौ काव्यम् अर्थात् वाचको वाच्यश्च संमिलितौ काव्यम् भवेत्। अनेन पूर्वाचार्याणां यत् केषांचित् शब्द एव केवलं काव्यमिति, केषांचित् पुनः यत् वाच्यमेव केवलं काव्यमिति एतन्मतद्वयमपि परास्तम्। तदेवं स्ववृत्तौ स्पष्टीक्रीयते कुन्तकेन –'द्वयोरपि प्रतितिलमिव तैलं तद्विदाह्लादकारित्वं वर्तते, न पुनरेकस्मिन्'[3]। अस्यायमाशयः- न केवलं रमणीयताविशिष्टस्य शब्दस्यैव काव्यत्वं स्यात्,

*सहायकाध्यापकः, संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृतपुरातनाध्ययनविश्वविद्यालयः

ISSN : 2454-2881

नापि तथाविधस्यार्थस्यैव केवलम्।

तत्र पुनराक्षिप्यते- 'ननु च वाच्यवाचकसंबन्धस्य विद्यमानत्वाद् एतयोर्न कथञ्चिदपि साहित्यविरहः'[४]। अत्रोच्यते- 'सत्यमेतत्, किंतु विशिष्टमेवेह साहित्यमभिप्रेतम्। कीदृशं? वक्रताविचित्रगुणालंकारसम्पदां परस्परस्पर्धाधिरोहः'[५] इति। अर्थात् लक्षणे यत् शब्दार्थयोः साहित्यमुपदिष्टमस्ति, तन्न सामान्यसाहित्यम्, अपि तु विशिष्टमेव। शब्दार्थयोः तत् साहित्यं तु षड्विधवक्रतासम्पन्नैः विचित्रगुणालंकाररूपसम्पद्भिर्युक्तं परस्परस्पर्धि च भवेत्। यदुच्यते -

समसर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा।।[६]

अर्थात्- समसर्वगुणसम्पन्नं मित्रद्वयमिव वक्रताविशिष्टगुणालंकारसम्पद्भिर्युक्तौ परस्परस्पर्धिनौ शब्दार्थौ अन्योन्यस्य शोभायै प्रवर्तेते।

अत्र अप्रस्तुतप्रशंसा-उपमाद्यर्थालंकारवैचित्र्यविहितं यमक-अनुप्रासादिशब्दालंकाररमणीयं समर्पकत्वसुभगं पदपूर्वार्ध- वाक्यादिवक्रतामनोहारि किमपि विलक्षणकाव्यसौन्दर्यं सहृदयहृदयमाह्लादयति।

पुनश्चात्र लक्षणे 'शब्दार्थौ' इत्यत्र द्विवचनप्रयोगेन न व्यक्तिद्वित्तमभिधीयते, अपि तु जातिद्वित्तमेव। तदेवं स्पष्टीक्रियते कुन्तकेन वृत्तिवाक्ये- 'व्यक्तिद्वित्ताभिधाने पुनरेकपदव्यवस्थितयोरपि काव्यत्वं स्यादित्याह- बन्धे व्यवस्थितौ। 'व्यवस्थितौ विशेषेण लावण्यादिगुणालंकारशोभिना संनिवेशेन कृतावस्थानौ।'[७] अनेन एतज्ज्ञायते यदत्र शब्दार्थयोः यत् साहित्यमभिहितमस्ति, तत्तु न केवलं द्वयोः शब्दार्थयोः साहित्यम्, अपि तु वक्रताविशिष्टलावण्या दिगुणालंकारशोभिनः शब्दस्य तत्तुल्यशब्दान्तरेण तथाभूतस्यैव वाच्यस्य तत्तुल्यवाच्यान्तरेण च अन्योन्यस्पर्धिभावेन साहित्यमेवात्राभिप्रेतम्, तदुच्यते- ''सहितावित्यत्रापि यथायुक्ति सजातीयापेक्षया शब्दस्य शब्दान्तरेण वाच्यस्य वाच्यान्तरेण च साहित्यं परस्परस्पर्धित्वलक्षणमेव विवक्षितम्''[८] इति।

तत्र पुनः शब्दार्थयोः वैशिष्ट्यं वर्णयन्नाह-

शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः।।[९]

अर्थात् काव्ये शब्दस्तु तद्वाचकेषु बहुष्वन्यशब्देषु विद्यमानेष्वपि कवेः विवक्षितार्थस्य प्रतिपिपादयिषितस्य भावस्य वा एकमात्रवाचक समुचितसमस्तसामग्रिकश्च भवेत्। यतः सामान्येन विवक्षितेऽर्थे तस्य विशेषाभिधायी शब्दः सम्यग् वाचकतां न प्रतिपद्यते, न च यस्य विशेषे गुणग्रामगरिमा वर्तते स सर्वसामान्येऽपि संभवतीति। तदेवमुदाहरणेन स्पष्टीक्रियते-

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः त्वमस्य लोकस्य च नेत्रकौमुदी।।[१०]

अत्र शिववाचकेषु शब्दसहस्रेषु सत्स्वपि कपालिन इति विभत्सरसालम्वनवाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कमपि चमत्कृतिविशेषं विदधाति। अर्थः पुनः सहृदयहृदयाह्लादकारी काव्यार्थविदां हृदयानन्दजनकः स्वस्पन्दसुन्दरः स्वभावसुकुमारश्च भवेत्। तदेवं व्याख्यायते- 'यद्यपि पदार्थस्य नानाविधधर्मखचितत्वं संभवति तथापि तथाविधेन धर्मेण सम्बन्धः समाख्यायते यः सहृदयहृदयाह्लादम् आधातुं क्षमते'[११] इति। तस्योदाहरणं यथा-

तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः।
निषादविद्धाण्डदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ।।[१२]

अत्र निर्वासितायाः शोकसंतप्तायाः सीताया दर्शनेन वाल्मीकिमुनेः चित्तं शोकाकुलं सञ्जातमिति विवक्षिते मुनेः चित्तस्य परमकारुणिकतां प्रतिपिपादयिषया कविना वाल्मीकिरिति पर्यायमात्रे वक्तव्ये 'यस्य निषादविद्धाण्डजदर्शनोत्थः शोकः श्लोकत्वमापद्यत' इत्यस्य प्रयोगेन करुणरसपरिपोषाङ्गतया सहृदयहृदयाह्लादकारी कश्चिद् अर्थचमत्कृतिविशेषः कवेरभिप्रेतः।

उभयचमत्कृतिर्यथा- यथा-

लीलया कुवलयं कुवलयमिव शीर्षे समुद्वहता।
शेषेण शेषपुरूषाणां पुरुषकारः समुपहसितः।।[१३]

अत्र अप्रस्तुतप्रशंसा-उपमाद्यर्थालंकारवैचित्रविहिता यमक-अनुप्रासादिशब्दालंकाररमणीया समर्पकत्वसुभगा पदपूर्वार्ध- वाक्यादिवक्रतामनोहारिणी काऽपि विलक्षणकाव्यशोभा सहृदयहृदयमाह्लादयति।

इत्थं वक्रोक्तिजीवितग्रन्थे आचार्यकुन्तकेन काव्यस्य काचित् नुतनावधारणा प्रतिपादिता यत्र शब्दार्थयोः विशेषसाहित्यमपेक्ष्यते। तत् साहित्यं न केवलं द्वयोः शब्दार्थयोः साहित्यम्, अपि तु षड्विधवक्रताविशिष्टलावण्यादिगुणालंकारशोभिनः शब्दस्य तत्तुल्यशब्दान्तरेण, तथाभूतस्यैव वाच्यस्य तत्तुल्यवाच्यान्तरेण च परस्परस्पर्धिभावेन साहित्यमेवात्रापेक्षितमित्यलं विस्तरेण।

**सन्दर्भसूत्राणि-**

१. वक्रोक्तिजीवितम्-प्रथमोन्मेषः, कारिका-७
२. तत्रैव- वृत्तौ
३. तत्रैव- वृत्तौ


ISSN : 2454-2881

४. तत्रैव- वृत्तौ
५. तत्रैव- वृत्तौ
६. तत्रैव- वृत्तिकारिका- १८
७. तत्रैव- वृत्तौ
८. तत्रैव- वृत्तौ
९. तत्रैव- कारिका- ९
१०. तत्रैव- वृत्तिकारिका- २७
११. तत्रैव- कारिका- ९, वृत्तौ
१२. तत्रैव- वृत्तिकारिका-३१
१३. तत्रैव- वृत्तिकारिका-२०

----

# ऋग्वैदिककाले प्रथिता पर्यावरणविषयिणी शिक्षा

डा. रामगोपाल उपाध्याय*

विश्वसाहित्यस्य प्राचीनतमग्रन्थोऽस्ति वेदः। मानवजातेः इतिहासः भारतीयसंस्कृतिश्च इहैव प्रतिष्ठिते वर्तेते। अस्माकं धर्म-संस्कृति-व्यवहारादीनां दर्पणतुल्यमस्ति वेदशास्त्रम्। न केवलं भारतवर्षस्य अपितु समग्रविश्वस्य सर्वमनीषिणां कृते ज्ञानस्रोतोऽस्ति ऋग्वेदः। वेदे हि सर्वादौ विश्वकल्याणभावना उद्घोषिता। शतपथब्राह्मणे अभिहितं यत् अनेकरत्नपूरितपृथ्वीदानेन यस्य दिव्यलोकस्य प्राप्तिर्भवति, ततोऽधिकम् अविनश्वरलोकस्य प्राप्तिर्भवति वेदाध्ययनेनैव।[1] अत्र हि समाज-दर्शन-राजनीति-आचार-विज्ञान-साहित्यादीनां सुष्ठु प्रतिफलनं दृश्यते। तथैव पर्यावरणविषकं चिन्तनमपि वेदर्षिभिः सम्यक् प्रतिपादितम्।

'परि आङ्' इति उपसर्गपूर्वकं 'वृञ् वरणे' इति धातोः ल्युट्प्रत्ययेन सिद्ध्यते पर्यावरणशब्दः। यस्यार्थो भवति सर्वतो आच्छादनम्। अर्थात् पृथिव्यप्तेजोवाय्वाकाशानां सर्वेषामपि तत्वानां समावेशोऽत्र परिलक्ष्यते। सम्पूर्णप्राणिभिः सह प्राकृतिकानि मानवविरचितानि च वस्तूनि पर्यावरणस्य परिधौ अन्तर्भवन्ति। संक्षेपेणास्माकं परितं विद्यामानं वातावरणमेव पर्यावरणमिति वक्तुंशक्यते।

मानवसमाजस्य कल्याणाय पर्यावरणस्य महत्त्वं विज्ञाय तद्रक्षार्थञ्च सचेष्टा आसन् प्राचीनभारतीयमनीषिणः। प्रदूषणमुक्त-वातावरणनिर्माणाय वैदिकर्षयः तत्पराः दृश्यन्ते। शतपथब्राह्मणे समुल्लेखितं यत् पर्यावरणस्य शुद्धतया एव यथासमये मेघो वर्षति, तदैव धरित्र्यामन्नं जायते तथा अन्नादिभि एव सर्वेषामपि जीवानां जीवनं संभवति- 'अग्नेर्वै धूमो जायते, धूमादभ्रम्। अभ्राद् वृष्टिः, अग्नेर्वा एता जायन्ते तस्मादाह तपोजा[2]' इति।

चराचरजगतः कृते वायोर्स्वच्छता अपरिहार्य वर्त्तते। वायुं विना विशेषतः 'अक्सिजन्' इत्यस्याविहने क्षणमपि प्राणिनः जीवितुं न शक्नुवन्ति। तस्माद् ऋग्वेदे प्रथितं यत् वायुः सदैव प्रदूषणमुक्तः

*संस्कृत-अध्यापकः, केन्द्रिय-हिमालयीय-संस्कृति शिक्षण-संस्थानम्, दाहूङ्ग, अरुणाचलप्रदेशः

शुद्धश्च स्यात्। वायुना आरोग्यविधायकं तत्त्वं हृद्यन्त्रमाप्नोति, येन हृदयस्य कार्यक्षमता प्रवर्द्धते-

'वात आ वातु भेषजं शम्भु मयोभु नो हृदे।

प्र ण आयूंषि तारिषत्३' इति।

शुद्धाशुद्धभेदेन वायुः द्विधा विभज्यते (१) श्वसितयोग्यः शुद्धः वायुः (२) जीवानां कृते हानिकारकदूषितो वायुश्च। यथा आह ऋग्वेदे द्विविधवायोर्मध्ये एक समुद्रपर्यन्तम् अन्यश्च समुद्राद्दूरदेशपर्यन्तं प्रवहति। तयोरेक अस्मभ्यं बलं प्रयच्छति, अपरश्च वायुः प्रदूषितपदार्थान् अन्यत्र क्षिप्त्वा जीवानां कल्याणं साधयति--

'द्वाविमौ वातौ वात आ सिन्धोरा परावतः।

दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः४'।। इति

शुद्धवायोर्गुणाः निवर्णयन् प्रतिपादितं यत् निर्मलवायुः यक्ष्मादिरोगनिवारणेऽपि समर्थोऽस्ति। शुद्धवायुना कल्याणकारीशक्तिमवाप्य रोगः मार्ज्यते- 'दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते५' इति। यथा पिता-भ्राता-मित्रादयोऽस्माकं हितमेव चिन्तयन्ति, तद्वत् वायुरपि अस्माकं जीवनरक्षणाय महौषधिरुपेण कार्यं निर्वहति-

'उन वात पितासि न उत भ्रातोत नः सखा।

स नो जीवातवे कृधि६' इति।

एवमेव जलप्रदूषणास्य निवारणोपायाः वेदे सुष्ठ वर्णिताः। यतो हि जलमेव जीवनमस्ति। जलं हि पेयरूपेण, स्वच्छतासम्पादने, विद्युदुत्पादने, अग्निनिर्वापणे, कृषिकार्यादिषु सततं प्रयुज्यते। आधुनिकविश्वे औद्योगिकीकरणस्य परिणामतः तथा तेषां व्यापकत्वात् तेभ्य उद्योगेभ्यः, निर्गताः तैलगैसादिपदार्थाः नदीषु समुद्रेषु वा मिलित्वा जलं दूषयन्ति। उद्योगेषु अधिकांशाः नदीनां समुद्रादीनां तटेषु संस्थाप्यन्ते। दूषकपदार्थाः नद्यादिषु पातनात् जलदूषणं प्रवर्धमानम् अवलोक्यते। समुद्रे परमाणुविस्फोटकद्रव्यैरपि जलस्य दूषणं जातम्।

वैदिकसंहितासु जलशुद्ध्यर्थ विशेषगुरुत्वं प्रतिध्वनितम्। अथर्ववेदे निगदितं यत् जलमेवौषधमस्ति अमृतमयं चास्ति। तदुत्तमगुणसम्पन्ननालेन शरीरस्य विकारानः नश्यन्ते-

'वारिदं वारायात वरणावत्यामधि।

तत्रामृतस्यासिक्तंतेना ते वारयो विषम्७।।' इति।

शुद्धजलं जीवेभ्यः प्रयच्छति। मात्रा यथा दुग्धेन स्वशिशुः पोष्यते, तथैव जलमपि अस्माकं

ISSN : 2454-2881

उतः शरीरस्य संरक्षणाय औषधरुपेण कार्यं निर्वहति पोषकत्वेन अस्ति--- 'उशतीरिव मातरः[८]।' तस्मात् अस्माकं देहाभ्यन्तरे रसधारारुपेण जलम्--- 'आपः पृणीत भेषजं वरुथं तन्वे ममऽ' इति। प्रवहत् समग्रविश्वं तृप्तं कारयित्वा सर्वेषां पोषकं स्यात् जलमिति काम्यते---

'तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ।

आपो जनयथा च नः[१०]' इति।

जलं हि मङ्गलमयं घृतमिव पुष्टिं जनयति--- 'आपो भद्रा घृतमिदाप[११]'। तस्मात् जलस्य दूषणं न कर्तव्यम्। अमृतमयभोजनमिव सन्तोषमानयति वारि-- 'मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यता वः[१२]' इति। वस्तुतः जलं विना जीवनस्यास्तित्वमेव कल्पयितुं न शक्यते। अत, जलस्य विशुद्धता-रक्षणं सर्वेषां मानवानां महत्वपूर्णं कर्तव्यं विद्यते।

अत्रैवोल्लेखनीयं भवति यत् पर्यावरणस्य आधारोऽस्ति वनं वनस्पतयश्च। वनानि विच्छिद्याधुना पर्यावरणं विनश्यते। वनानां ध्वंसकारणाद् भूमेः, क्षरणं, मरुस्थलादीनामुद्भवश्च जातः। तस्मात् वृक्षादीनां संरक्षणेन प्राकृतिकभारसाम्यं रक्षणीयम्। वेदेषु वनस्पतिसम्बन्धीनि बहूनि तथ्यानि उपलभ्यन्ते। वस्तुतः औषधिशब्दः वनस्यतेर्पर्यायवाचक । वृक्षाणां कृते वनस्पतिस्तथा उद्भिदानां तृणानां च कृते औषधिशब्दः प्रयुज्यते। पश्चात् औषधिशब्दः चिकित्सार्थमुपयोगीनां वृक्षाणां कृते प्रचलितो जातः[१३]।

वैदिकसाहित्ये वनस्पतीनामुपयोगः बाहुल्येन निगदितः। वृक्षः जीवेभ्यः प्राणवायुं (Oxy-gen) प्रयच्छति। तस्माद् ऋग्वेदे वनस्पति मातारूपेण आख्यायते- 'औषधीरिति मातरः[१४]'। अथर्ववेदे तु पुरुषजीवनी[१५]'- रूपेण वृक्षः प्रदर्शितः। औषधिभिः विविधरोगाः विनश्यन्ते, तस्मात् ताः 'भिषक्' इत्यपि प्रोच्यते[१६]। वनस्पतयः पशुभ्योऽपि शक्तिं प्रदाय तेभ्यः सुरक्षां प्रददति- 'उच्छुषमा औषधीनां गावो[१७]' इति। ऐतरेयब्राह्यणेऽपि महत्वपूर्णं तथ्यमिदमुद्घोषितं यत् वनस्पतिः मानवजगतः प्राणोऽस्ति- 'प्राणो वै वनस्पतिः[१८]।' वृक्ष-वनस्पत्यादीनां महत्वं प्रतिपादयन् ऋग्वेदे कथितं यत् वृक्षान् मा छेदय, यतो ते प्रदूषणं निवारयन्ति- 'मा काकम्बरीम् उद्वहो वनस्पतिम्, अशस्तीर्वि हि नीनशः[१९]' इति। पुनश्च निगदितं यत् वनस्पतयः जलानां स्रोतान् संरक्षन्ति, अतः वृक्षाणां रोपणं कर्तव्यम्- 'वनस्पतिं वन आस्थापयध्वम् नि षू दधिध्वम् अखनन्त उत्सम्[२०]' इति। सत्यं हि वृक्षादयः प्रदूषणं दूरीकुर्वन्ति। ते एव विषरूपवायुं (कार्वन् डाइ अक्साइड) आत्मनि स्वीकृत्य शुद्धप्राणवायुं मानवाय प्रयच्छन्ति- 'उग्रा या विषदूषणी... ओषधीः[२१]'। इति। एवञ्च वनस्पतिभ्यः पृथिव्यां वृष्टिः पतति, तेन वृष्टिजलेन फलानि पुष्णाणि च विकशन्ति- 'मयोभूवो वृष्टयः सन्त्वस्मे सुपिप्पता औषधीर्देवगोपाः[२२]' इति। तस्मात् वृक्षाणां

रक्षणेन संवर्धनेन च पर्यावरणस्य संरक्षणं कर्तव्यमिति वेदैः अस्माकं दृष्टिराकृष्टा।

अतः स्मर्तव्यं यत् मानवकल्याणाय पर्यावरणसंरक्षणविषये अस्माकं पूर्वजनामृषीणां ये सन्देशाः वर्तन्ते, तेषामनुपालनम् अद्यातीव प्रयोजनमिति अनुभूयते।

**सन्दर्भसूत्रनिर्देशः**


१. शत. ब्रा. ११/५/६/९
२. शत.ब्रा. ५/३/२/१
३. ऋक्. १०/१८३/१
४. ऋक्. १० /१३७/२
५. ऋक्. १० /१३७/४
६. ऋक्. १० /१८६/२
७. अथर्व. ४ /७/१
८. ऋक्. १० /९/२
९. ऋक्. १० /९/७
१०. ऋक्. १० /९/३
११. अथर्व. ३ /१३/५
१२. अथर्व. ३ /१३/६
१३. वे.स.अ.शि.पृ. १४२
१४. ऋक्. १० /९७/४
१५. वीरुधः. पुरुषजीवनी, अथर्व. ८ /७/४
१६. ऋक्. १० /९७/६
१७. ऋक्. १० /९७/८
१८. ऐत.ब्रा. २ /४
१९. ऋक्. ६ /४८/१७
२०. ऋक्. १० /१०१/१
२१. अथर्व. ८ /७/१०
२२. ऋक्. ७ /१०१/५




ISSN : 2454-2881

**सहायकग्रन्थाः**


१. अथर्ववेदः, प्रकाशने विश्वबन्धु, वैदिक शोध संस्थान, होशियारपुर, १९६०

२. ईशादि नौ उपनिषद्, गीताप्रेस, गोरखपुर, वि. स. २०६६

३. ऋगवेद-संहिता, सायणभाष्य, चौखम्बा विद्याभवन, वाराणसी, २००७

४. कल्याण, वेद कथांक, गीताप्रेस, गोरखपुर, १९९९

५. वेद शास्त्र संग्रह, विश्वबन्धु, साहित्य अकादमी, नई दिल्ली, २००१

६. वेदभाष्यभूमिका, सम्पा. बलदेव उपाध्याय, चौकम्बा संस्कृत संस्थान, वाराणसी, वि.स. २०४२

७. वेदो में समाज, अर्थनीति और शिक्षाशास्त्र, ड. कपिलदेव, विश्वभारती अनुसन्धान परिषद, उ.प्र., २००२

८. वैदिक अनुशीलन, कुमार शशिप्रभा, विद्यानिधि प्रकाशन, २००१

९. शतपथब्राह्मणम्, अच्युत ग्रन्थमाला, बनारस, १९९७


- - - -

# व्यक्तिविवेकग्रन्थानुसारं महिमभट्टस्य ध्वनिलक्षणखण्डनम् - एकं साहित्यशास्त्रीयविश्लेषणम्

ड. देबव्रतबाडइ*

संस्कृतसाहित्यशास्त्रं प्राचीनकाले काव्यालंकारनाम्ना परिचितमेवास्ति। काव्यालंकार-अभिधानस्यालङ्कारशब्दः काव्यसौन्दर्यस्य बोधको वर्त्तते। लक्षणया च तेन शब्देन काव्यसौन्दर्यपरं शास्त्रमित्यभिधीयते। काव्यशास्त्रे साहित्यशास्त्रे वा रस-अलङ्कार-ध्वनि-रीति-वक्रोक्ति-औचित्यमिति षट् साहित्यशास्त्रीयसम्प्रदायाः प्राप्यन्ते। एते सर्वे साहित्यशास्त्रीयसम्प्रदायाः साहित्यस्य काव्यस्य वा सारभूतानि मूलआत्मस्थानीयानि तत्वानि विशदेन सूचयति। रससम्प्रदायस्य प्रवर्तक आसीत् भरतमुनिः, अलंकारसम्प्रदायस्य प्रवर्तको भामहः, रीतेसम्प्रदायस्य संस्थापको वामनः, ध्वनिसम्प्रदायस्य उद्भावको आसीत् आनन्दवर्धनाचार्यः एवं सर्वशेषे औचित्यसम्प्रदायस्य प्रवर्तक आसीत् क्षेमेन्द्रः। एतेषु षट्सम्प्रदायेषु रसः तथा ध्वनिसम्प्रदायस्य प्रभावः सर्वाधिकं व्याप्नोति प्रचारितास्तीति।

ध्वन्यालोककारानन्दवर्धनः तस्य प्रणीते ध्वन्यालोकग्रन्थे उद्घोषयति 'काव्यस्यात्मा ध्वनिरिति'। तत्र तेन रसध्वनिरेव प्रधानरूपेण स्वीकृयते -

''काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्वमूचुस्तदीयं
तेन ब्रुमः सहृदयमनः प्रीतये तत्स्वरूपम्।।''[1]

ध्वनिशब्दस्यार्थाः पञ्चप्रकारकाः भवन्ति। ते च व्यञ्जकशब्दः, व्यञ्जकोऽर्थः, व्यञ्जनाव्यापारः, व्यङ्ग्योऽर्थः उत्तमं व्यङ्ग्यप्रधानं काव्यं च। काव्यस्यात्मा ध्वनिरित्यत्र ध्वनिशब्दस्यार्थः व्यङ्ग्यार्थो वर्तते। पुनः व्यङ्ग्यार्थो त्रिविधः - वस्तुरूपः, अलंकारूपः तथा रसरूपश्चेति। ध्वनिस्वरूपलक्षणसम्पर्के ध्वन्यालोकग्रन्थे उक्तम् -

---

*सहायकाचार्यः, संस्कृतसाहित्यविभागः, कुमारभास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः, नलबारी


ISSN : 2454-2881

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।"[२]

अर्थात्, यत्रार्थो वाच्यविशेष वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्त स काव्यविशेषो ध्वनिरिति सूरिभि मन्यते। किन्तु आनन्दवर्धनस्य एतद् प्रकारकं ध्वनेर्लक्षणं व्यक्तिविवेककारमहिमभट्टेन न स्वीकृयते। महिमभट्टेन ध्वनितत्वं निराकृतमासीत्। महिमभट्टः अनुमितौ एव ध्वनेरन्तर्भावं मन्यते। व्यक्तिविवेकग्रन्थे एवमुच्यते –

"अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाच्यम्।।"[३]

महिमभट्टः ध्वनिस्थले अनुमितिशब्दस्य प्रयोगं करोति। उक्तंच –

"वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।
सम्बन्धतः कुत्रचित् सा काव्यानुमितिरित्युक्ता।।"[४]

अस्याः काव्यानुमितेर्लक्षणस्य अभिप्रायोऽस्ति, यत्र वाच्यार्थः वाच्येन अनुमितः वस्त्वलङ्कारव्यभिचारिरूपोऽर्थो वा येन केनापि सम्बन्धेन अर्थान्तरं बोधयति तद् काव्यमिति कथ्यते। एतन्माध्यमेन स्पष्टरूपेण अवगम्यते यत् महिमभट्टेन अत्र ध्वनिलक्षणानुसारेण अनुमितेर्लक्षणम् अकृतम्। ध्वनिलक्षणखण्डने ये दशप्रकारका दोषाः महिमभट्टेन दर्शिताः , तेषां सम्बन्धेऽपि गद्यरूपेण विचार्य तेन कारिकाद्वयमाध्यमेन उक्तम् –

"अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम्।
द्विवचनवाशब्दौ च व्यक्तिर्ध्वनिर्नाम काव्यवैशिष्ट्यम्।।
वचनं च कथनकर्तुः कथिता ध्वनिलक्ष्मणीति दश दोषाः।
ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः"[५]

अत्रोक्तं ध्वनेर्लक्षणस्य दशप्रकारकाः दोषाः यथा – प्रथम अर्थस्य उपसर्जनीकृतस्वत्वं विशेषणम्, द्वितीयः शब्दः इति पदस्य प्रयोगः, तृतीयः शब्दस्य उपसर्जनीकृतार्थत्वं विशेषणम्, चतुर्थः 'तम्' अर्थम् इति ध्वनेर्लक्षणे प्रयुक्तस्य 'तम्' इति तच्छब्दस्य पुंस्तम्, पञ्चमः व्यङ्क्तः इत्यत्र द्विवचनम्, षष्ठः वा इति शब्दः, सप्तमः व्यङ्क्तः इति शब्देन शब्देऽर्थ च बोधिता व्यञ्जना, अष्टमः ध्वनेः शब्दः काव्यस्य एकं नवीनतमनाम। नवमः काव्यस्य वैशिष्ट्यम् तथा दशः सूरिभिः इति कथनक्रियायाः कर्तुः कथनम्। ध्वनिलक्षणेषु अन्तर्गतेषु एतेषु पदेषु अव्याप्तेः, अतिव्याप्तेः, असम्भवस्य, अवाच्यवचनस्य च कारणानि विराजन्ते। तर्हि ध्वनिलक्षणे एतानि पदानि नावश्यकानि। ध्वनेर्लक्षणस्य सर्वे दोषहेतवः अत्र अधः विशदीक्रियन्ते यथा –

१. **अर्थस्य उपसर्जनीकृतस्वत्वम्** – अर्थशब्दः वाच्यपरत्वेऽव्याप्तिः इति निर्दिष्टम्। आनन्दवर्धनेन तस्य उल्लिखिते ध्वनिलक्षणे अर्थशब्दस्य प्रयोगः त्रिधा कृता। यत्र प्रथमप्रयोगः 'यत्रार्थः', द्वितीयप्रयोगः 'उपसर्जनीकृतस्वार्थौ' एवं च तृतीयोऽस्ति 'तमर्थम्'। अत्र यदि 'अर्थः' शब्देन वाच्यार्थो विवक्षितोऽस्ति तदा वाच्यार्थ आत्मानं गुणीकृत्य प्रधानव्यङ्ग्यस्य बोधं व्यञ्जनया जनयति, तदा ध्वनिः स्वीकृतः स्यात्। यत्र प्रतीयमानो व्यञ्जनया प्रतीयमानान्तरं बोधयति तत्र ध्वनिलक्षणं न सङ्गच्छति। यथा-

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयाभास पार्वती"।।[६]

श्लोकेऽस्मिन् वाच्यार्थेन पार्वत्यां लज्जा-अवहित्थादयो व्यभिचारिभावाः व्यञ्जनामाध्यमेन अवगम्यन्ते। तत्र तैः व्यङ्ग्यार्थैः पार्व्यत्यां महादेवशिवविषयका रतिः व्यज्यते। आनन्दवर्धन यत्र वाच्यार्थः एव व्यञ्जनया प्रतीयमानं वोधयति तत्रैव ध्वनिं स्वीकरोति। यत्र 'अर्थः' शब्दस्य माध्यमेन वाच्यार्थः गृह्यते तत्र ध्वनिलक्षणस्य एववादिनि इत्यत्र अतिव्याप्तिः। अत्र 'अर्थः' शब्देन वाच्यार्थः इति ग्रहीतुं शक्यते। यतोहि आनन्दवर्धनेन 'अर्थः' इति शब्दस्य 'वाच्यविशेषः' इति व्याख्या कृता।

'अर्थः' इति शब्दस्य येन तेन प्रकारेण वाच्यः तथा प्रतीयमानश्चेत्युभौ अर्थौ यदि गृह्यते तर्हि ध्वनिलक्षणस्य एवं प्रकारको अर्थो भवति – यत्र वाच्यार्थः प्रतीयमानार्थश्च आत्मानं गुणीकृत्य प्रधानं प्रतीयमानमर्थं व्यञ्जनया बोधयति सः काव्यविशेषो ध्वनिरितिर्भवति। एवम्प्रकारेण यदि 'अर्थः' शब्दस्य वाच्यार्थः प्रतीयमानार्थश्च इति उभयोः ग्रहणं भवति तर्हि ध्वनिलक्षणं अतिव्याप्तिदोषेण दुष्टं भवति। यथा –

"विपरीतसुरतसमये ब्रह्माणं दृष्ट्वा नाभिकमले।
हरेर्दक्षिणनयनं चुम्बति ह्रियाऽऽकुला लक्ष्मीः"।।[७]

उद्धृते श्लोकेऽस्मिन् हरेर्दक्षिणनयनस्य चुम्बनं वाच्यार्थो विद्यते। तेन सूर्यरूपस्य दक्षिणनेत्रस्य तिरोधानरूपमस्तङ्गमनं व्यज्यते। तेन कमलस्य सङ्कोचरूपेण ब्रह्मणस्तिरोधानं व्यञ्जनया वोध्यते। तेन च लक्ष्म्या विपरीतसुरतसमये लज्जाया निवृत्तिबोध्यते। एतद्व्यतिरिक्तम् अत्र लज्जानिवृत्तरूपस्य अन्त्यस्य वस्तुनः प्रतीतिः वाच्यस्य चुम्बनस्य, सूर्यरूपनेत्रतिरोधानस्य,कमलसङ्कोचस्य, ब्रह्मणस्तिरोधानस्य च प्रतीतिभिर्व्यवहिता वर्तते। सूर्यरूपस्य नेत्रस्य तिरोधानरूपः प्रतीयमानेऽर्थे आत्मानं गुणीकृत्य ब्रह्मणस्तिरोधानं बोधयति। एतच्च प्रतीयमानं स्वात्मानं गुणीकृत्य लज्जाया निवृत्तिं बोधयति। अतः एतादृशाः प्रहेलिकास्वरूपे श्लोके ध्वनिलक्षणस्य अतिव्याप्तिदोषो दृश्यते।

पुनः 'अर्थः' शब्दस्य वाच्यरूपेऽर्थे स्वीकृतम् तर्हि अव्याप्तिः अपि च उभयार्थस्वीकारे अतिव्याप्तिर्भवति। तत्कारणेन महिमभट्टेन व्यक्तिविवेके उक्तम् –

ISSN : 2454-2881

"यद्यर्थ इति वाच्योऽर्थऽभिमतोव्याप्तिरेव सा
येनैवंवादिनीत्यादावर्थस्यार्थान्दराद् गतिः।
अथोभौ तर्ह्यतिव्याप्तिर्द्वैत्रिवस्तुव्यवायिनि
प्रहेलिकादिरूपेऽपि काव्ये ध्वन्यात्मता यतः"।।[४]

**२. शब्देति पदस्य प्रयोगः-** ध्वन्यालोकग्रन्थमध्ये आनन्दवर्धनेन ध्वनिलक्षणे 'शब्दः वा' इति पदयो प्रयोगः कृतः। शब्दस्य विशेषणं 'गुणीकृतवाच्यत्वं' भवति। एवं शब्देन तस्य विशेषणेन च एवम् अर्थः निष्पद्यते यत् शब्दः स्वकीयं वाच्यार्थं गुणीकृत्य व्यञ्जनया प्रधानं प्रतीयमानं बोधयति तर्हि तत्र ध्वनिर्भवति। परन्तु व्यक्तिविवेककारस्य महिमभट्टस्य कथनमेवं यत् - ध्वनिलक्षणे 'शब्दः' इति शब्दस्य प्रयोगः, शब्देन स्वबोधस्य वाच्यार्थस्य गुणीकरणे कथं चाऽनुचितं स्यात्। केनापि शब्दमध्ये व्यञ्जनाया अभावः अस्ति एवं च शब्देन स्ववाच्यार्थस्य गुणीकथनमसम्भवमेव।

शब्दमध्ये व्यञ्जकत्वभावः - व्यञ्जकत्वधर्मं व्यञ्जना नाम्ना अभिधीयते। शब्दमध्ये केवलमात्रम् अभिधाव्यापारो वर्तते, लक्षणा न व्यञ्जना व्यापारस्य धर्मम् अस्तीति। यदि वा शब्दमध्ये अभिधा-लक्षणा-व्यञ्जनाव्यापारः धर्मः स्यात् तर्हि युगपदेव तासां व्यापारः भवति। यथा - 'गङ्गायां घोषः' इति वाक्यमध्ये क्रमेणैव वाच्यादीनां बोधं भवति। वाच्यार्थेन व्यतिरेके लक्षणा व्यातिरेके कदापि व्यञ्जना न सम्भवति। तर्हि महिमभट्टेन उक्तम् - 'पुनरस्यानेकशक्तिसमाश्रयत्वाद् व्यापारान्तरपरिकल्पनं तदर्थस्य एवोपपद्येते, न शब्दस्य, तस्यानेकशक्ति समाश्रयत्वासिद्धेः। तथाहि एकाश्रयाः शक्तयोऽन्योन्यनपेक्षवृत्तयोऽप्राकृतपौर्वर्यनियमा युगपदेव स्वकार्यकारिण्यो दृष्टाः, यथा दाहकत्वप्रकाशकत्वादयो वह्नेः। तस्माद्भिन्नाश्रया एव ताः, न शब्दैकसमाश्रया इत्यवसेयम्'।[६]

शब्दमध्ये अभिधासत्तायाः यद्रुपं प्रमाणं विद्यामानः तत् सङ्केतमध्ये न ज्ञायते। परन्तु व्यञ्जकत्वं सङ्केतेन कृतमिति वक्तुमपि न शक्यते। कारण व्यञ्जना प्रकरणादिना एव ज्ञायते, न तु सर्वत्र। आनन्दवर्धनस्य मतानुसारेण व्यञ्जकत्वम् औपाधिकं वर्तते। यथा - जलमध्ये वह्निसम्बन्धेन उष्णाता आगच्छति।

**अनुकरणशब्दः -** आनन्दवर्धनस्य ध्वनिलक्षणे शब्दस्य विशेषणं गुणीकृतार्थमर्थात् शब्दः स्वार्थं गुणीकृत्य एव ध्वनौ प्रतीयमानं बोधयति। उक्तप्रकारकं विशेषणं खण्डयितुम् आद्यो शब्दः द्विविध इति स्वीकृत - अनुकरण अणुकार्यः च। अनुक्रियमानः शब्दोऽनुकरणशब्दः नाम्ना अभिधीयते। तस्य पुनः द्विविधः भेदाः स्तः - सार्थक निरर्थक च। उदाहरणं यथा - 'रामः' इति सार्थकअनुकरणशब्दः, 'कोकिलकूजनः' अस्ति निरर्थकअनुकरणशब्दः।

**३. उपसर्जनीकृतस्वत्वम् अनुकरणशब्दः -** यत् शब्दः सार्थक अनुकरणशब्दो भवति

तस्य वाच्यार्थो गौणो भवति। यतो हि तस्य स्वरुपमेवाऽप्रधानं भवति। अनुकरणशब्दः स्वकीयं वाच्यार्थं स्वरूपभूतमर्थं प्रति गुणीकरोति। सार्थकानुकरणशब्दस्योदाहरणरूपेण कालिदासस्य एकं श्लोकं वक्तुं शक्नुमः -

"तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति।
कैकेयीशङ्कयेवाह परितच्छद्मना जरा"।।[१०]

पद्येऽस्मिन् रामचन्द्रः श्रीर्न्यस्यताम् इति जराया वचनं वर्तते, तत्र जराया वाक्यरूपः स शब्दः सार्थको भवति। तस्यानुकरणं कालिदासेन रामचन्द्रे श्रीर्न्यस्यतामिति कृतम्। अस्मिन् स्थाने रामे राजलक्ष्म्याः स्थापनरूपम् अर्थं गुणीकृत्य रामे श्रीर्न्यस्यताम् वाक्यरूपं शब्दस्वरूपम् एव बोधयति। इति शब्दः रामे श्रीर्न्यस्यताम् इत्यस्य अनुकरणत्वं द्योतयति। अपरं च स्वार्थकोऽनुकरणरुप एव शब्द स्वार्थं गुणीकरोति, किन्तु ध्वनिर्न मतः। न हि शब्दस्वरूपेऽर्थे कश्चन चमत्कारो भवति, येन शब्दस्वरूपार्थस्य प्रधानता स्यात्। केनापि, सार्थकानुकरणे एव ध्वनित्वं स्यात्। अन्यत्र यत्र अनुकरणशब्दो नास्ति तत्र ध्वनि न स्यात्। एतदप्रकारकं व्याप्तिरूपं दोषो ध्वनिर्लक्षणे मिलति।

अनुकार्यशब्दः - यस्य अनुकरणं भवति तत् शब्दः अनुकार्यशब्दः उक्तम्। शब्दस्य द्विविधाः भेदाः - सार्थकानुकार्यशब्दः निरर्थकानुकार्यशब्दश्च। रामचन्द्रे श्रीर्न्यास्यताम् इति शब्दमध्ये सार्थकानुकरणशब्दः वर्तमानः। पुनः अयं श्रीर्न्यास्यताम् एवं रूपं स्वरूपमनुकार्यशब्दमेव बोधयति। इति शब्दमाध्यमेन अनुकरणशब्दस्य बोधकताशक्तिः स्वरुपभूतेऽनुकार्ये एव नियन्त्रिता भवति।

अनुकार्यशब्दस्य उपसर्जनीकतार्थत्वासंभवः - अनुकार्यशब्दस्य व्यवहारं तथा प्रयोगः सामान्यतया वाच्यार्थस्य बोधार्थं भवतीति। तर्हि अनुकार्यशब्दः वाच्यार्थवोधस्य साधनं भवति, वाच्यार्थबोधः साध्यो भवति। साधनं साध्यं प्रति सर्वदा गौणं भवति। उदाहरणस्वरूपं यथा - जलानयनरूपकार्ये जलम् एव प्रधानं भवति किन्तु तत्र जलापात्रघटं तु अप्रधानरूपे विवेच्यते। यथा घटादि कदापि जलं गुणीकर्तुं न शक्नोति तेनैव प्रकारेण अनुकार्यशब्दऽपि स्ववाच्यमर्थं गुर्णाकर्तुं कदापि न समर्था भवति। शब्दस्य वाच्यार्थं प्रति गुणीभाव एव विद्यते, तत्र तस्य व्यभिचाररूपो भावः न विद्यते। अतः गुणीकृतार्थत्वविशेषणस्य असम्भवत्वं प्रतिपादयति। तर्हि ध्वनिलक्षणमध्ये असम्भवनामकं लक्षणदोषं उत्थापयति। कदापि वा यदि व्यङ्ग्यार्थापेक्षया वाच्यस्य गुणीभावो मन्यते तदा शब्दस्य तद् विशेषणम् अपि न भवति। सततम् अर्थस्य गुणीभावस्य कथनेनैव सिद्धे शब्दस्य उपसर्जनीकृतार्थत्वरुपस्य विशेषणस्य वचनं वा पुनरुक्ति भवति।

**४. ध्वनेर्लक्षणे तम् इति पदस्य पुंस्त्वम्** - ध्वनिलक्षणे प्रयुक्तं 'त्वमर्थम्' इत्यत्र 'तम्' इति शब्दस्य पुंसि प्रयोगः न यथार्थम्। किञ्च एतद्कारिकायाः पूर्वकारिकाषु 'प्रतीयमानं' तदर्थवस्तु इत्यादिरुपेण

ISSN : 2454-2881

परामर्शविषयस्य प्रतीयमानस्य नपुंसकत्वं निर्देश अस्ति, न तु पुंसि।

**५. 'व्यङ्क्तः' इति द्विवचनम्** – 'व्यङ्क्तः' शब्दः 'वि' उपसर्गपूर्वकम् अञ्जधातोः 'लट्' इति लकारस्य प्रथमपुरुषे द्वि-वचनान्तं रुपं भवति। व्याकरणशास्त्रानुसारेण यदा द्विवचनं भवति तदा कर्तारौ द्वौ भवतः। उदाहरणं यथा – रामः श्यामः च गच्छतः। गमनक्रियायाः कर्तारौ भवतः अतः द्विवचनम्। किन्तु उक्तकारिकायां 'व्यङ्क्तः' इति क्रियापदस्य प्रयोगः प्रमादयुक्त एककर्तृकत्वात् मिलति। ध्वनिर्लक्षणे 'यत्रार्थः शब्दो वा' इत्यत्र 'वा' इति पदेन एक एव कर्ता अवगम्यते। येन प्रकारेण कथितम् – 'रामः वा श्यामः वा गच्छतु'। अत्र राम-श्यामयोरन्यतर एकम् एव गमनं करोति। तद्रुपप्रकारेण ध्वनिलक्षणे उक्तं' अर्थः वा शब्दः' इत्यत्रऽपि एककर्तृकत्वात् व्यनक्ति इति प्रयोगः यथायुक्तम् इति मन्यते।

**६.७. च – वा एवं 'व्यङ्क्त' इति शब्देषु बोधिता व्यञ्जना** – 'वा' इति शब्दार्थस्य अव्ययमनेकार्थ सम्भवम्। तस्य प्रयोगः यथा समुच्चयार्थे भवति तथैव विकल्पार्थेऽपि भवति। आचार्यः अभिनवगुप्तस्य स्वीकृतानुसारेण ध्वनिलक्षणस्य सङ्गतिं विकल्पार्थ कृतवन्तः। परन्तु महिमभट्टेन तस्य मतस्य पूर्वं समर्थनं कृत्वा परवर्तिसमये निराकरणं कृतम्।

यत्र अर्थः प्रधानरूपेण व्यञ्जको भवति तत्र शब्दोऽपि सहकारीरुपेण गौणव्यञ्जको भवति। एवं कुत्रापि वा शब्दप्रधानव्यञ्जकरूपेण अपि च अर्थ गौणव्यञ्जकरुपेण प्रयुज्यते। येन प्रकारेण, अविवक्षितवाच्यध्वनौ शब्द एव प्रधानव्यञ्जको भवति अपि च अर्थः गौणव्यञ्जको भवति। शब्दार्थौ उभावपि व्यञ्जनावोधने प्रधानगौणरुपेण कर्तारौ भवतः। अताएव व्यङ्कत इति पदस्य साधुता वर्तते एतद् अभिनवगुप्तस्य मतम्। पुनः महिमभट्टेन अभिनवगुप्तस्य मतवादस्य खण्डनं क्रियते। शब्दमध्ये नास्ति व्यञ्जना, अभिधाभिन्नव्यापारः न एतद् सम्भवति। शब्दमध्येऽपि तथैव अर्थान्तयरस्य बोधस्तत्रानुमानमेव मन्यते। प्रकृतपक्षे व्यञ्जना केवलं तत्र सम्भवति यत्र स्वरुपेण सहैव अन्यमर्थं प्रकाशयति। उदाहरणं यथा – प्रदीपः स्वात्मानं येन प्रकारेण प्रकाशयति तेन प्रकारेण युगपत् घटमपि। व्यञ्जनायाः बोधनार्थम् एवमेव क्रमो भवति। आलोचितमेतद् स्वरुपेण सहैव शब्दार्थो वा प्रतीयमानं न वोधयति, अतएव व्यञ्जना नास्तीति।

**८. ध्वनिरिति काव्यस्य नवीननाम** – व्याकरणशास्त्रानुसारेण ध्वनिशब्दस्य त्रिविधाः अर्थाः विद्यन्ते। यथा – प्रथमः 'ध्वनति इति ध्वनिः' इति व्युत्पन्त्यानुसारं श्रुयमाणः शब्दः ध्वनिः। द्वितीयः 'ध्वन्यते पूर्वशब्देन जन्यते बोध्यते वा' इति व्युत्पत्यानुसारेण मध्यमः अश्रूयमाणः शब्दः यः शब्दः। तृतीयः, 'ध्वननं ध्वनिः' इति व्युत्पत्यानुसारेण द्रुतादिभेदरूपः व्यापारः ध्वनिः इति मन्यते।

वैयाकरणानां ध्वनौ अर्थवोधकस्य प्रधानस्य स्फोटस्य व्यञ्जकत्वं विद्यते। अपरपक्षे

ISSN : 2454-2881

साहित्याशास्त्रीयानां शब्दे अर्थे काव्यविशेषे च व्यङ्ग्यस्य रसादेर्व्यञ्जकत्वं विद्यते। तत्र व्यञ्जकत्वसाम्येन व्यञ्जकशब्दः, व्यञ्जकोऽर्थः प्रधानव्यङ्ग्यस्य व्यञ्जक शब्दार्थरूपः काव्यविशेषः च ध्वनिशब्देन वर्णित। वैयाकरणानां द्रुतादिवृत्तिभेदरूपे ध्वनौ व्यापारत्वमप्रसिद्धत्वं च विद्यते। अतएव व्यापारत्वेन अप्रसिद्धत्वेन च साम्येन व्यञ्जनाव्यापारोऽपि ध्वनिशब्देन उक्तम्। वैयाकरणानां शब्दजशब्दरूपमध्ये ध्वनौ जन्यत्वं वर्तते, यतः शब्दजशब्दः पूर्वशब्देन जायते। यत्र जन्यत्वं तत्र पश्चाद्भावित्वं भवत्येव। अतः पश्चाद् भावित्वरुपेण साम्येन व्यङ्ग्यार्थोऽपि ध्वनिशब्देन कथितः। व्यङ्ग्यस्य वाच्यात् पश्चाद् भावित्वं प्रसिद्धमेव, एवम् अलंकारशास्त्रे ध्वनिव्यवहारस्य मूलरुपेण व्याकरणम् इति सर्वजनविदितम्।

परन्तु महिमभट्टस्य मतानुसारेण आनन्दवर्धनेन वैयाकरणमताद् ध्वनिस्फोटयोः व्यङ्ग्य-व्यञ्जकभावः इति स्वीकृतम् यत् न कदापि सम्भवति। ज्ञापक स्वज्ञानेन सहैव ज्ञाप्यं बोधयति। श्रोतारस्य ध्वनेर्ज्ञानं प्रथमं भवति परवर्तीसमये स्फोटस्य ज्ञानम् उपलब्धति। कदापि सम्मिलितरुपेण ध्वनिः स्फोटं स्वज्ञानेन सहैव न बोधयति। उपरन्तु ध्वनिऽपि व्यञ्जको नास्ति स्फोटऽपि व्यङ्ग्यो नास्ति। ध्वनौ व्यञ्जना स्फोटे व्यङ्ग्यता च नास्ति। तर्हि ध्वनिस्फोटयोर्गम्यगमकभावः अर्थात् अनुमाप्यानुमापकभावः स्वीकृतव्यम्।

**९. काव्यस्य वैशिष्ट्यम्** – ध्वनेर्लक्षणे निर्दिशितं विशेषशब्दस्यार्थः अतिशयः स्वीकृयते तदा ध्वनिलक्षणस्य अयमर्थो जायते यत् काव्यस्य चमत्कारातिशयो ध्वनिः कथ्यते। यत्काव्ये चमत्कारस्य अतिशयो भवति तत् ध्वनिर्मन्यते इति भावार्थः। एतेन अवगम्यते यत् ध्वनौ केवलं चमत्कारस्यातिशयः वा आधिक्यं भवति। परन्तु एतद् संशयऽपि आयाति यत् कस्मिन् काव्यमध्ये चमत्कारातिशयो भवति ? एतस्य प्रश्नस्य उत्तरम् अस्ति, रसमयं काव्यमध्ये रसमाध्यमेन सततः चमत्कारातिशय भवति।

किन्तु महिमभट्टस्य मतानुसारेण कदापि रसमध्ये चमत्कारस्य अतिशयः कथमपि न सम्भवति यतो हि रसो विशेषरहित निरतिशयो विद्यते। तर्हि अतिशयरहितेन रसेन माध्यमेन काव्ये केन प्रकारेण अतिशय प्रदातुं शक्यते। तर्हि महिमभट्टेनोक्तम् –

"पाठ्यादथ ध्रुवागानात् ततः सम्पूरिते रसे।
तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः खणम्।।
ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः।
व्यज्यते ह्लादनिः ष्यन्दो येन तृप्यन्ति योगिनः"।।[११]

तदभावे चास्य काव्यता एव न स्यात् किमुत विशेष इति अनारम्भणीयमेवैतत् प्रेक्षावतां स्यात् वैफल्यात्।

**१०. सूरिभिः शब्दः** – ध्वन्यालोकग्रन्थमध्ये आनन्दवर्धनाचार्यः ध्वनेर्लक्षणे 'सूरभि कधितम्' शब्दस्य

ISSN : 2454-2881

प्रयोगः कृतम्। सूरिभिरिति पदेन कर्तृसामान्यो वा कर्तृविशेष किम् उक्तम् ? अथवा सूरिभिरिति पदं युज्यते वा ? कर्तृसामान्यस्य ग्रहणे कथितः इति क्रियायाः निर्देशः वर्तते। क्रिया कर्तारं विना न भवति, ततश्च कथनक्रियया एव कर्तृबोधः न सम्भवति। येन प्रकारेण – 'सः गच्छति' इति उदाहरणे 'गच्छति' पदेनैव कर्तुः बोधे 'सः' इति ग्रहणं व्यर्थम्। पुनः कर्तृविशेषस्य यदि ग्रहणं करोति तदा सूरिभित्यस्य प्रयोगः न समीचीनम्। यतो हि ध्वनिलक्षणस्य प्रवक्तृ एकं विद्वान् एव आसीत् तर्हि कर्तृविशेषस्य बोधे सूरिभिरिति पदस्य प्रयोगः निष्फलं भवति।

एतदस्ति आनन्दवर्धनाचार्यकृतं ध्वनिलक्षणस्य निराकरणस्य दशप्रकारकाः युक्तिः यत् व्यक्ति विवेककारेण महिमभट्टेन उल्लिखितम्।

उपसंहारः – उपरोक्तालोचनामाध्यमेन ज्ञातुं शक्यते यत् महिमभट्टेन ध्वनिसम्प्रदायस्य विरोधं कृत्वा ध्वनिलक्षणस्य दशप्रकारकाः दोषाः निर्दिष्टाः । तस्य मतानुसारेण ध्वनिर्नास्ति एव। तेन ध्वनिस्थाने अनुमितिशब्दस्य प्रयोगः कृतः। यद्यपि सः एतस्य ध्वनिलक्षणस्य खण्डणं कृत्वा यशोलाभं कर्तुं समर्थो भवति परन्तु तस्य युक्तिः कदापि सम्यक् इति न प्रतिभाति कुत्रापि वा यथार्थयुक्ति इति न मन्यते।

अन्तटीका -

१. ध्वन्यालोकः – १/१
२. ध्वन्यालोकः – १/१३
३. व्यक्तिविवेकः – १/१
४. व्यक्तिविवेकः – १.१/२५
५. व्यक्तिविवेकः – १.१/२३,२४
६. कुमारसम्भवम् – ६/८४
७. गाथासप्तशती – ७/७४
८. व्यक्तिविवेकः – १.१/२१, २२
९. व्यक्तिविवेकः – १
१०. रघुवंशम् – १२/२
११. व्यक्तिविवेकः – १/१

सहायकग्रन्था : –


- अभिनवभारती, सम्पा. नगेन्द्र, हिन्दीविभागः, दिल्लीविश्वविद्यालयः, २००१

### स्रोथिका


- कुमारसम्भवम्, सम्पा. परमेश्वरदीनपाण्डेय, चौखम्बाकृष्णदासअकादेमी, बाराणसी, २०१३
- व्यक्तिविवेक , सम्पा. राजकुमारशर्मा, राष्ट्रीयसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्, २०११
- गाथासप्तती, सम्पा, उमापतिउपाध्याय:, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, २०००
- ध्वन्यालोक , सम्पा. सत्यनारायणचक्रवर्ती, संस्कृतपुस्तकभाण्डार:, कलिकाता, २०१२
- ध्वन्यालोक (लोचनटीकासहितम्), सम्पा. रामसागरत्रिपाठी, मोतिलालवेणारसीदास, बाराणसी, २००८
- रघुवंशम्, सम्पा. कृष्णमणित्रिपाठी, चौखम्बासुरभारतीप्रकाशनम्, बाराणसी, २००६


ISSN : 2454-2881

# धर्मशास्त्रेषु धर्मः

ड॰ अरुन्धती गोस्वामी*

धर्मविषयकं शास्त्रं हि धर्मशास्त्रम्। भारतीयसाहित्ये अनेकानि विषयकानि शास्त्राणि सन्ति। याज्ञवल्क्यस्मृतौ विद्यानां धर्मस्य च चतुर्दशस्थानानि निर्दिश्यन्ते। यथा-

पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।। इति।[१]

अर्थात् मत्स्य-कूर्म-वराहादिपुराणानि, न्यायशास्त्रम्, मीमांसाशास्त्रम्, मन्वादिधर्मशास्त्राणि, शिक्षा-कल्प-निरुक्त-व्याकरण-छन्द-ज्योतिष-षड़वेदाङ्गानि, ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेद-चतुर्वेदाः ब्राह्मणानि उपनिषद् च- एतानि धर्मविषयकानि चतुर्दशशास्त्राणि तथा विद्यास्थानानि इति ज्ञायन्ते। धर्मविषयकानि एतानि शास्त्राणि एव धर्मशास्त्रारूपेण मन्यन्ते। परन्तु मनुवचनात् सूक्ष्मार्थे धर्मशास्त्रं केवलं हि स्मृतिरिति। उक्तञ्च -

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। इति।[२]

अतः साधारणतः स्मृतिग्रन्था एव धर्मशास्त्ररुपेण स्वीक्रियन्ते संस्कृतवाङ्मये।

धृञ्-धारणे इति धातोः मन् प्रत्यययोगे धर्म इति शब्दो भवति। धारणात् धर्मः इति। स्व-स्व-रूपे मानवः यः धारयति स एव धर्मस्य साधारणार्थः। अभिधानानुसारेण धर्मशब्दः अनेकार्थप्रयुक्तः। यथा- अनुशासनं, मानवानां कर्तव्यानि, नैतिकता, व्यवहारिकविधिः, सद्गुणाः, वेदमूलकानि सत्कर्मानुष्ठानानि इत्यादयः। धर्मशब्दस्य अनेकविधानि निर्वचनानि प्राप्यन्ते। यथा- धरति धारयति वा लोकमिति धर्मः। यद्वा ध्रियते लोकः अनेनेति धर्मः। यद्वा ध्रियते लोकयात्रानिर्वाहार्थं यः सः धर्मः इति। धर्मस्य मूलरूपेण वेदो हि प्रतिपाद्यते - वेदो धर्ममूलमिति।[३] पुनश्च तद्विदां च स्मृतिशीले इति[४] अर्थात् वेदविज्ञः स्मृतिः तथा शीलमपि धर्मः। मनुनापि उच्यते - वेदोऽखिलो धर्ममूलमिति।[५] श्रीमद्भागवद्गीतायामपि एवं तथ्यं प्राप्यते - वेद प्रणिहितो धर्मोह्यधर्मस्तद्विपर्ययः इति।[६]

*कृष्णकान्तसन्दिकैसर्वकारीयसंस्कृतमहाविद्यालयः, जालुकवारी, गुवाहाटी

महर्षिजैमिनिमतेन वेदेषु उपलब्धेषु प्रयुक्तेषु वा नियमानां लक्षणानां च पालनं हि धर्मः – चोदनालक्षणोऽर्थो धर्मः इति।[8] विश्वस्य प्रतिष्ठायां धर्मो हि सर्वोत्कृष्टः तथा सर्वेषु विषयेषु आश्रयस्थलरूपेण वर्ण्यन्ते मनीषिणः। उक्तञ्च तैत्तिरीयारण्यके –

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं
प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे
सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति। इति।[9]

धर्मपदस्य अनेकविधा परिभाषा प्राप्यन्ते शास्त्रेषु। वैदिकवाङ्मये धार्मिकविधिषु धार्मिकक्रियासु निश्चितनियमेषु अलौकिकशक्तिविषयकेषु आचरणविषयकनियमेषु इत्यादयेषु धर्मपदस्य प्रयोगो भवति। ऋतस्य रक्षाकर्ता तथा असुरहन्तारूपेणापि प्रतिष्ठितं धर्मः–

ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन्।
दिवो धर्मन् धरुणे सेदुषो नृञ्जातैरजातौं अभि ये ननक्षुः।। इति।[10]

उपनिषद्ग्रन्थेषु धर्मस्य स्कन्धत्रयः उल्लिख्यन्ते। यथा यज्ञः अध्ययनं दानञ्चेति गृहस्थधर्मः प्रथमः तपस्या इति द्वितीयः तथा आचार्यकुलवासीब्रह्मचर्यधर्मः तृतीयश्चेति। उक्तञ्च छान्दोग्योपनिषदि–

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एवेति द्वितीयो–
ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्।
सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति। इति।[11]

अत्र धर्मपदेन आश्रमाणां माध्यमेन मानवजीवनस्य कर्तव्यानि निर्दिश्यन्ते। श्रीमद्भगवद्गीतायामपि धर्मस्य एवं रूपं प्राप्यते – स्वधर्मे निधनं श्रेयः इति। कालक्रमेण धर्मस्य परिभाषायाः व्यापकत्वं जातम्। मानवजीवनस्य सर्वेऽधिकाराः, कर्तव्यानि, अनुशासनानि, नैतिककार्याणि इत्यादयः धर्मशब्देऽन्तर्भुक्ताः जाता। धर्मे हि जगतः सर्वं प्रतिष्ठितम्। अतः दीक्षान्ते समावर्तने वा गुरु शिष्यमनेन उपदिशति तैत्तिरीयोपनिषदि – सत्यं वद धर्मं चर ....... इत्यादि।[12]

धर्मविषयकविभिन्नपरिभाषाः शास्त्रेषु प्रसिद्धाः। यथा धर्मो विश्वस्य जगतः प्रतिष्ठा इति, लोके धर्मिष्ठं प्रजा उपसर्पन्ति इति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति इति, धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः इति, वेदप्रतिपाद्य प्रयोजनवदर्थो धर्मः इति, श्रुतिस्मृतिविहितो धर्मः इत्यादयः। महाभारतेऽपि धारणात्मको धर्मः इति कथ्यते कर्णपर्वे। यथा –

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद्धारणसंयुक्तं स धर्ममिति निश्चयः।। इति।[13]

एतदुपरि महाभारते धर्मशास्त्रेषु चानेकस्थानेषु साधारणधर्मविषयकाः परिभाषाः प्राप्यन्ते। यथा –

आचारः प्रभवो धर्मःइति।

अहिंसा परमो धर्मः इति।[१४]

आनृशंस्यं परो धर्मः इति।[१५]

आचारः परमो धर्मः।[१६] इत्यादयः।

मनुमते श्रुतिशब्देन वेद उच्यते तथा धर्मशास्त्रपदेन स्मृतिः बोध्यते। वैदिकसाहित्ये धर्मविषयकाः विभिन्नाः तथ्याः यत्र तत्र उपलभ्यन्ते। परन्तु विज्ञजना एव वेदस्य ज्ञानार्जनं कर्तुं शक्यन्ते, सर्वेषां कृते वैदिकज्ञानमसम्भवम्। अतः ते विषयाः आहत्यैव सरलीकृत्वा उपस्थापनं क्रियते धर्मशास्त्रकाराः स्मृतिग्रन्थेषु। शास्त्रज्ञः धर्म द्विविधा विभज्यते – श्रौतं स्मार्तं चेति। वेद-ब्राहमणप्रतिपादितकर्म हि श्रौतधर्मः। उक्तञ्च – दाराग्निहोत्र सम्बन्धमिज्या श्रौतस्य लक्षणमिति।[१७] अर्थात्, वेदविहितः श्रौतसूत्रेषु उपलब्धमानेषु अग्निष्टोम-सोमयोग-राजसूय-वाजपेय-इत्यादि-यज्ञादयेषु आचरणं हि श्रौतधर्मः। स्मृतिप्रतिपादितविषयान् हि स्मार्तधर्मः कथ्यते। उक्तञ्च – स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैयतः। इति।[१८] अर्थात् स्मृतिगृन्थेषु उपलब्धमानाः वर्णाश्रम-आचार-यम-नियमाः हि स्मार्तधर्मः। मनुस्मृतिग्रन्थस्य भाष्यकारमेधातिथिमतेन धर्मस्य पञ्च स्वरूपमस्ति। यथा-वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः नैमित्तिकधर्मः तथागुणधर्मः चेति।१९ मनुस्मृतिग्रन्थस्य भाष्यकारगोविन्दराजः तथा गौतमधर्मसूत्रस्य व्याख्याता हरदत्तोऽपि एतान् पञ्च प्रकारान् धर्मान् मन्येते। कुल्लूकभट्टेन एते सर्वे मताः स्वीकृत्य भविष्यपुराणोक्तधर्मस्य पञ्च प्रकाराः उद्धृताः तस्य भाष्ये।[२०] याज्ञवल्क्यस्मृतिभाष्यकारविज्ञानेश्वरमतेन स्मार्तधर्माः षड्विधाः। ते कर्तव्यबोधकाः षड्विधाः धर्माः यथा – वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्रधर्मः साधारणधर्मश्चेति।[२१]

**वर्णधर्मः** – ब्राहमणक्षत्रियवैश्यशूद्र – चतुर्वर्णानां कृते ये धर्माः कर्तव्यानि च वर्णिताः ते वर्णधर्माः। यथा – ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादि।[२२]

**आश्रमधर्मः**– ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्न्यास–चतुराश्रमाणां कृत य धर्माः कर्तव्यानि च वर्णिताः ते आश्रमधर्माः। यथा– अग्नीन्धनभैक्षचर्यादिः।[२३]

**वर्णाश्रमधर्मः** – वर्णानुसारं चतुराश्रमे निर्दिष्टः धर्मः वर्णाश्रमधर्मः। यथा – पालाशो दण्डो ब्राह्मणस्येत्येवमादिः।[२४]

**गुणधर्मः** – शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः।२५

**निमित्तधर्मः** – अनेन प्रायश्चित्तानि बोधितानि। यथा –विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्।[२६]

**साधारणधर्मः** – अहिंसादिः।[२७] धर्मोऽयं सर्वेषां जनानां पालनीयानि कर्तव्यानि। मनुमते संक्षेपेण

धर्मः पञ्चविधः। यथा अहिंसा सत्यम् अस्तेयं शौचम् इन्द्रियनिग्रहश्चेति। उक्तञ्च -

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः।।[२८]

ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः तथा सर्वे जनाः एतान् साधारणधर्मान् पालनीयाः। पुनरपि मनुना धर्मस्य दशविधं लक्षणमुक्तम् -

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।[२९] इति।

अत्र धृतिः धैर्यम्, अन्यकृतापराधमार्जनं क्षमा, दमः मनःसंयमः, अस्तेयं चौर्याभावः, शौचम् दैहिकं मानसिकञ्च पवित्रता, इन्द्रियनिग्रहः इन्द्रियसंयमः, धीः यथार्थज्ञानं, विद्या आत्मज्ञानं, सत्यम् यथार्थवचनं, अक्रोधः क्रोधहेतौ क्रोधाभावश्चेति बोध्यन्ते। एते दशविधा धर्माः सर्वेषां जनानाम् आत्मोन्नते मूलमिति मन्यन्ते। ये खलु जनाः एतान् धर्मान् सयत्ने अधीत्य अनुवर्तन्ते, तेषां निश्चितरूपेण मोक्षप्राप्तिर्भवन्ति।[३०]

बौधायनधर्मसूत्रानुसारं त्रिविधं धर्मलक्षणम्। यथा वेदोक्तः धर्मः प्रथमः धर्मशास्त्रोक्तः द्वितीयः शिष्टानां शिष्टाचारश्च तृतीयः चेति। उक्तञ्च-

वेदोक्तः परमो धर्मः धर्मशास्त्रेषु चापरः।
शिष्टाचारश्च शिष्टानां त्रिविधं धर्मलक्षणम्।। इति।

महाभारतेऽपि धर्मस्य भागत्रयं स्वीक्रियते।[३१] धर्मस्य प्रमाणं पञ्चविधमिति मनुमतेन -

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनतुष्टिरेव च।।[३२] इति।

वेदः अर्थात् ऋक्-यजु-साम-अथर्व-एते चतुर्वेदाः ब्राह्मणग्रन्थाः उपनिषद्ग्रन्थाश्च धर्मस्य मूलप्रमाणम्। एतदुपरि धर्मस्य अन्यप्रमाणानि यथा वेदविदां मन्वादीनां स्मृतिशास्त्रम् ब्रह्मण्यतादिरूपं शीलम् कम्बलवल्कलाद्याचरणरुपः आचारः साधूनामात्मतुष्टिश्चेति। पुनश्च धर्मस्य चतुर्लक्षणं निर्दिश्यते मनुना, यथा -

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।।[३३]

ऋक्सामयजुरथर्वाख्यः वेदः, धर्मशास्त्राणि, सतामाचारः सदाचारः, स्वस्य चात्मनः प्रियमिति धर्मस्य चतुर्लक्षणम्। परन्तु याज्ञवल्क्यमतेन धर्मस्य पञ्चलक्षणम्। यथा -

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्।। इति।[३४]

ISSN : 2454-2881

अत्र श्रुतिशब्देन चतुर्वेदः ब्राहमणानि उपनिषद इत्यादि बोध्यन्ते। स्मृतिः सर्वाणि धर्मशास्त्राणि, सदाचारः शिष्टानामाचारः, सज्जनानां चित्तसन्तोषः, शास्त्रसम्मतः संकलपः– एतानि धर्मस्य उत्सभूतानि ज्ञेयानि। वस्तुतस्तु वेद एव प्रधानं प्रथमं च धर्ममूलम्। अन्यानि प्रमाणानि वेदमूलकानि एव ग्राह्यानि, वेदविरोधे तु सर्वथा त्यज्यानि। एवं सर्वेषु धर्मशास्त्रेषु धर्मविषयकाः अनेके तथ्याः उपलभ्यन्ते।

उपरोक्ततथ्येषु निष्कर्षो जायते यत् धर्मपदस्य योऽर्थः साम्प्रतिककाले प्रचलितः समाजे तत्तु धर्मस्य यथार्थः न जातः। धर्मस्य या आङ्गलपरिभाषा Religion इति जगति प्रतिष्ठितास्ति स धर्मस्य आंशिकार्थः, सम्पूर्णार्थो नास्ति। धर्मपदस्य परिसरः अति व्यापकः। मानवजीवनस्य सर्वकर्मणि एव धर्मशब्दे अन्तर्भूक्तोऽस्ति। प्राचीनभारतस्य शिक्षा, संस्कृतिः, नैतिकता, अनुशासनं, सद्गुणाः, आचारादि सर्वे एव धर्मे अन्तर्भूक्ताः। मानवसमाजं सम्यग्रूपेण परिचालयितुं धर्मस्य प्रभावोऽपरिसीमः। धर्माचरणं विना समाजस्य उन्नतिं न सम्भवति। अतः धर्मः समाजस्य गोप्ता इति कथ्यते। बहुजनहिताय बहुजनसुखाय इत्यादि सुभाषितेऽपि धर्मस्य प्रभावो हश्यते। आत्महितादतिरिच्य हिंसादिवर्जनेन समाजस्य हितचिन्तनं सम्भवति केवलमात्रं स्मार्तधर्माचरणेन। अतः धर्मशास्त्रोक्त–धर्मविषयाः सर्वदा मानवजीवनस्य अपरिहार्य-अङ्गरूपेण स्वीक्रियन्ते समाजे।

संदर्भसूत्राणि –


१. याज्ञवल्क्यस्मृतिः, १.३
२. मनुस्मृतिः, २,१०
३. गौतमधर्मसूत्राणि, १.१
४. तत्रैव, १.२
५. मनुस्मृतिः, २.६
६. श्रीमद्भागवद्गीता, ६.४४
७. पूर्वमीमांसा, १.१.२
८. तैतिरीयारण्यकम्, १०.६३
९. ऋग्वेदः, ३.१७.७, ४.५३.३, ५.६३.१, ६.७०.७, ७.८९.५, ८.४३.२४, ९.६४.१, ९.७३.१, ९.८३,.५, १०.९०.१६, १०.१७०.२ इत्यादयः
१०. तत्रैव, १६.२
११. छान्दोग्योपनिषद्, २.२३.१
१२. तैत्तिरीयोपनिषद्, १.११.१


ISSN : 2454-2881

१३. महाभारतम्, कर्णपर्वम्, ६९.५८
१४. तत्रैव, अनुशासनपर्वम्, ११५.१
१५. तत्रैव, वनपर्वम्, ३७३.७६
१६. मनुस्मृतिः, १.१०८, वशिष्ठधर्मसूत्रम्, ६.१
१७. मत्स्यपुराणम्, १४४.३०
१८. तत्रैव
१९. मनुस्मृतिः, २.२५, मेधातिथिभाष्यम्
२०. तत्रैव, कुल्लूकभाष्यम्
२१. अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः। तद्यथा – वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति। मिताक्षरा, याज्ञवल्क्यस्मृतिः, १.१
२२. तत्रैव
२३. तत्रैव
२४. तत्रैव
२५. तत्रैव
२६. तत्रैव
२७. तत्रैव
२८. मनुस्मृतिः, १०.६३
२९. तत्रैव, ६.९२
३०. तत्रैव, ६.९३
३१. वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः।
शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः।। महाभारतम्, अनुशासनपर्वम्, १४१.६५
३२. मनुस्मृतिः, २.६
३३. तत्रैव, २.१२
३४. याज्ञवल्क्यस्मृतिः, १.७

- - - -


ISSN : 2454-2881

# महाभारते गार्हस्थ्याश्रमधर्मवर्णनम् - एका समीक्षा

ड° नन्दिता शर्मा*

प्राचीनकालादपि वर्त्तमानकालपर्यन्तंभारतवर्षस्य महाभारतस्य महत्वं गुरुत्वं च न अल्पो भवति, यतोहि भारतवर्षस्य सभ्यतानां कीर्तिस्तम्भरूपेण विराजमानम् महाभारतम्। भारतीयजनानां चिन्तने यानि तानि विषयानि अन्तर्भुक्तानि तानि खलु सर्वाणि महाभारते अन्तर्हितोऽस्ति। अस्मिन् महाकाव्ये आध्यात्मिक-साहित्यिक- राजनैतिक-सामाजिक-धार्मिक-ऐतिहासिकानां विषयानां बीजानि विकीर्णानि सन्ति। तुलनीयः-

"महत्वे च गुरुत्वे च ध्रियमानं यतोधिकम्।
महत्वाद् भारतवत्वाच्च महाभारतमुच्यते।।"[१]

भारतीयजनानां पारिवारिक-व्यवहाहिक - आध्यात्मिकादिनाक्षेत्रेऽपि रामायणमहाभारतचरित्राणां प्रभावोऽनवधारणीयम्। अस्मिन् महाभारते दैनन्दिनजीवनस्य यदाचरणविधिः तद् विषये सुन्दरसावलीलभावेन निर्देशमुपलभ्यते। तर्हि एवमपि उच्यते - "यत्न भारते तन्न भारते।" हति

पुनश्च-

"धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ।
यदिहास्ति तदयत्र यत्नेहास्ति न तत् क्वचित्।।"[२]

तदुपरि महाभारतं एकं धर्मशास्त्रमित्युच्यते। धर्मशास्त्रेऽस्मिन् षट्प्रकाराणां धर्मणां विषये उल्लेखं प्राप्यते यथा - वर्णाधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मः च। अस्य धर्मशास्त्रस्य शान्तिपर्वे धर्मस्य प्रयोजनीयताविषये एवमुक्तमस्ति -

"धारणाद् धर्ममित्याहु धर्मेण विधृताः प्रजाः।"[३]
"धर्मेनेन प्रजाः सर्वा रक्षन्ति स्म परस्परम्।"[४]

अर्थात् आचार-व्यवहार-न्याय-नीतिरादिनां यः स्यात् प्रभवसंयुक्तः स एव धर्मः। यद्द्वारेण

*सहकारी अध्यापिका, कृष्णकान्तसन्दिकैसर्वकारीयसंस्कृतमहाविद्यालयः, जालुकवारी, गुवाहाटी

ISSN : 2454-2881

समस्तानां भूतानां प्राणीनां च कल्याणं भवति। एतेषां मध्ये आश्रमसम्बन्धीयकर्त्तव्यानामेव आश्रमधर्मस्य मूल विषयः। मानवजीवनं चतुराश्रमे विभक्तमस्ति- ब्रह्मचर्यः-वाणप्रस्थः-सन्यासः च।

महाभारतस्य शान्तिपर्वणः भृगुभरद्वाजसंवादः इत्याख्यं एकनवत्थाधिकशततमोऽध्याये गार्हस्थाश्रमं सर्वाश्रमाणां मुलमुदाहरन्ति।[५] शान्तिपर्वणः प्रारम्भतः आचार-रीतिनीति-धर्मादिविषयकानां तथा मोक्षधर्मविषये चर्चा भवति। तर्हि भारतीयदार्शनिकदृष्ट्या शान्तिपर्वः अन्यपर्वणः तुल्यात् अतीवगुरूत्वपूर्णः। अस्मिन् शोधपत्रे केवलं शान्तिपर्वणः भृगुभरद्वाजसंवादे एकनवत्याधिकशततमोऽध्याये वर्णितः गार्हस्थ्याश्रमविषये आलोचनं भवति। न केवलं शान्तिपर्वणि अपि च महाभारतस्य अश्वमेधिकपर्वेऽपि गार्हस्थ्याश्रमस्य श्रेष्ठत्वम् एवं प्रतिपादितम् -

"गृहस्थो ब्रह्मचारी च वाणप्रस्थोऽथ भिक्षुकः।
चत्वारः आश्रमाः प्रोक्ताः सर्वे गाहस्थ्यमुलकाः।।"[६]

अस्मिन् गार्हस्थ्याश्रमस्य आचारलक्षणविषये भृगुः भरद्वाजं व्याख्यायते यत् - समावृत्तानां सदाचारणां सहधर्मफलार्थिनां गृहाश्रमो विधीयते अर्थात् सर्वदा सत्पथेन आर्जितधनने वृत्तेन वा सदाचारभूत्वादपि धर्मपथमनुसन्धानं कृत्वा गृहस्थः संसारधर्मः पालनमुचितम्।[७] पुनः गार्हस्थजीवनपरिपालनार्थे यद् धनं प्रयोजनम् तद् आहरणविधिविषये प्राप्यते यत् त्रिवर्गसाधनमपेक्ष्यागर्हितेन कर्मे रताः अर्थात् सर्वदा धर्मार्थकामिति त्रिवर्गमनुसरणं कृत्वा सर्वाणि कर्मणि कर्तव्यानि इति। पुनः स्वाधायलब्धप्रकर्षेण अध्यापनयोगात् वा धनमार्जितं अथवा ब्रह्मर्षिनिर्मितेन अर्थात् याजनहवनादिकर्मकृत्वा गृहस्थीजनाः धनमाहरणं कर्त्तव्याः। क्वचित् अद्रिसारगतेन अर्थात् पर्वतात् चन्दनरत्नादिराहरणं विक्रयं च कृत्वा धनमार्जितं कर्त्तव्यम्। कदाचित् हव्यकव्यनियमाभ्यासदैवतप्रसादोपलब्धेन यजमानवृत्तिधारणकृत्वा वा यत् धनार्जितं तद् गार्हस्थ्यजीवनपरिपालनार्थे वर्त्तयेत्।[८]

एतद् प्रसंगे भृगुः गृहस्थीजनानां कृते पालनीयं अतीवप्रयोजनीयकर्त्तव्यविषये उच्यते यत् - गुरुकुल निवासिनः परिव्राजकाः ये चान्ये संकल्पितव्रतनियमधर्मानुष्ठायितस्तेषामप्यत् भिक्षावलिसंविभागाः प्रवर्तन्ते, तेषां वानप्रस्थिनां प्रति सर्वदा गृहस्थीजनाः अभिवादन-अनसूयवाक-प्रदान सुखशक्त्यासन-सुखशयन-अभ्यास इति करणीयकर्त्तव्यम्। यतोहि अतिथिसेवा गार्हस्थजीवने अवश्यं कर्त्तव्याः। तत्र गृहस्थीजनानां कृतेऽतीव महत्वपूर्णकर्त्तव्यं तथा दायित्वं पञ्चमहायज्ञानां पालनं तथा माहात्यं विषये भिन्नानां उपनिषदि अपि वर्णितमस्ति। तद पञ्चमहायज्ञाः यथा-देवयज्ञो-पितृयज्ञो-ब्रह्मयज्ञो-अतिथियज्ञो-भूतयज्ञो इत्येते। अपि च महाभारते यज्ञक्रियारनुष्ठानयोगेन देवताः प्रीयन्ते। श्राद्धादिकर्मानुष्ठानयोगात् पितरो, पुनः विद्याभ्यासश्रवणधारणेन ऋषीणां सन्तुष्टं भवन्ति। किन्तु वंशोरक्षार्थ अपत्योत्पादनेन सन्तानोत्पादनेन प्रजापतिः अर्थात् स्वयं ब्रह्माः सन्तुष्टोऽभवत्।[९] अर्थात् गार्हस्थ्याश्रमे

ISSN : 2454-2881

सर्वदा यज्ञकर्मणि देवता पुजनं अवश्यमेव कर्तव्यम्। किन्तु गृहस्थीजनानां कृते सर्वदा परिहारणीकर्म: अथवा वर्जनीयकर्मविषये अस्मिनैव पर्वे उल्लिख्यते यत् वात्सल्यात् सर्वभूतेभ्यो वाच्या तथा परितापोदघातश्च पारूष्यं अर्थात् निन्दनीयकर्कशवाक्यं सर्वदा परिहर्तव्यम्। कदापि दम्भहंकारं कर्तुं नोचितम्।

"वात्सल्यासर्वभुतेभ्यो वाच्या: श्रोतसुखागिर: ।
परितापोपघातश्च पारुष्यं चात्रगर्हितम् ।।"[१०]

किन्तु अहिंसा, सत्यं, अक्रोधं च इति गुणानां अवश्यमेव गृहस्थीजना: अवधारणीयमित्युच्यते। तुलनीय:

"अहिंसा सत्यमक्रोध: सर्वाश्रमगतं तप: ।"[११]

पुन: महाभारतेऽपि गृहस्थीजनां अतिथियज्ञविषये एवं सतर्कक्रियते यत् गृहस्थीजना: यदि अतिथे: मनोवाञ्चां न समाद्रियति, तेभ्य: किञ्चिदपि न ददाति अथवा यदि अतिथिजनस्य आशां न पुर्णं भवति, तद अवस्थायां तस्यै गृहस्थीजनाय सर्वमेव दुष्कृतं प्रदत्ता प्रत्यागच्छति।[१२]

एवं प्रकारेण महाभारतस्य शान्तिपर्वणि भृगुभरद्वाज संवादे गार्हस्थाश्रमे रता: जनानां कृते किं नो कर्तव्यमुचितम् किं नो परिहारणीयम् एतद् वर्णनं दीयते। तदुपरि भारतीयसमाजजीवनस्य संस्कृति-आचार रीति-नीति: धर्म: मानसिकोत्कर्षसाधनादय: भिन्नानां विषयाणां अन्तर्भुक्ता: महाभारते विद्यत्ते। तर्हि महाकाव्यमिदं भारतीयानां संस्कृते: दर्पण: इति वक्तुं शक्यते। यतोहि ब्रह्मचर्य: गार्हस्थ्य-वाणप्रस्थ:-वाणप्रस्थ:-सन्यास:-च अस्या: चत्वार: आश्रमाणां कर्त्तव्यानि यद् महाभारतयुगेऽपि सुचारूरूपतया परिचालिता: अभवत्, सा प्रतिककालेऽपि भारतीयजना: एतेषां आश्रमानां स्तरमाध्यमेन जीवनानां परिचालितां दृश्यते। तर्हि महाकाव्यमिदं वर्तमानकालेऽपि भारतीयजीवनस्य मूलचालिकाशक्तिरूपेण मर्यदां लभते।

**पादटीका :**

१. महाभारत, १.१.२७३-७४
२. तदेव, १.६२-२६
३. तदेव, १२.१०९.११
४. तदेव, १२.५९.१४
५. तदेव, १२.१९१.१०
६. तदेव, १४.४५.२३

७. तदेव, १२.१९१.१०
८. तदेव, १२.१९१.१०
९. तदेव, १२.१९१.१३
१०. तदेव, १२.१९१.१४
११. तदेव,
१२. तदेव, १२.१९१.१२

सहायकग्रन्थाः

१. महाभारतम्, गीताप्रेस, गोरखपुर, १९९५।
२. संस्कृत साहित्य का इतिहास, डा॰ उमाशंकर शर्मा 'ऋषि', चौखम्बा भारती अकादमी, २०१९।
३. संस्कृत निबन्ध रत्नाकर, डा॰ राजकिशोर सिंह, धर्मेन्द्रनाथ शास्त्री, प्रकाशन केन्द्र, लखनऊ- ७।
४. महाभारतम्, शान्तिपर्वणः, इन्दिरा शइकीया वरा, २०१६।
५. The Mahabharata: An Encyclopedia of Indian Wisdom, Thoughts and culture, Apurb Ch. Barthakuria, Punthi Pustak, 2012.

----


ISSN : 2454-2881

# अथर्ववेदे आयुर्विज्ञानम्

सुशान्तराय:

मनुष्यजीवने स्वास्थ्यस्य महनीया भूमिका वर्तते। स्वस्थशरीरं हि आद्यं धर्मसाधनं कथ्यते। वेदेषु, पुराणेषु, रामायणे, महाभारते, महाकाव्येषु तथा च विविधशास्त्रेषु मानवस्य शतायुष्यं कर्मण्यता च कांक्ष्येते। भारतीयजीवनपद्धतौ कर्मपरस्य मनुष्यस्य शतायुष्कता अत्यन्तं प्राचीनकालात् काम्यते- कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।[१]

आयुषो वेदः आयुर्वेदः कथ्यते। आयुर्वेदो हि स्वस्थस्य स्वास्थ्यरक्षणं आतुरस्य च विकारप्रशमनमभिलषति। चरकसंहितायामायुर्वेदस्य परिभाषा इत्थं दत्तास्ति-

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानं च तच्च यत्रोक्तमायुर्वेदःसः उच्यते।।[२]

आयुर्वेदशास्त्रस्य विपुलं वाङ्मयं अथर्ववेदे उपलभ्यते येन मानवजीवनमुपक्रियते। अथर्ववेदाभ्यन्तरे आयुर्वेदीयसिद्धान्तस्य, व्यावहारस्य च अनेकेषां महनीयजिज्ञास्यविषयाणां विशिष्टसङ्कलनमस्ति।

अथर्ववेदे विंशतिकाण्डानि , एकत्रिंशदधिकसप्तशतकानि (७३१) सूक्तानि, प्रायः षट्सहस्राधिकाः मन्त्राः विद्यन्ते। तेषु दीर्घायुषः कृते बहुविधाः प्रार्थनापरकमन्त्राः, रोगाणां, शारीरिकवयवानां, रोगप्रतीकाराणां, विविधरोगेषु विविधोषधीनां प्रयोगस्य च वर्णनमुपलभ्यते। येन आयुर्वेदस्य अथर्ववेदेन सह सम्बन्धः स्पष्टः प्रतीयते। अन्यवेदापेक्षया अथर्ववेदे आयुर्वेदविषयस्य विस्तरः वर्णनमस्ति। आयुर्वेदो हि अथर्ववेदस्य उपाङ्गत्वेन प्रथितोऽस्मि। अतएवास्मिन्, वेदे आयुर्वेदस्य विषये विस्तृतं वर्णनं विद्यते। यद्यपि ऋग्वेदः प्रथमो वेदः किञ्च आयुर्वेदविषयस्य वर्णनपर आधारः कथ्यते तथापि ऋग्वेदे येषाम् आयुर्वेदसम्बन्धिनां तत्त्वानां सूत्ररूपे संकेतोऽस्ति तेषामथर्ववेदे सविस्तरं वर्णनमुपलभ्यते।

अथर्ववेदे दीर्घायुषः कृते बहुविधाः मन्त्राः उपलभ्यन्ते। यथा-

तुभ्यमेव जरिमन्वर्धतामयं मेममन्ये मृत्यवो हिंसिषुः शतं ये।

मातेव पुत्रं प्रमना उपस्थे मित्र एनं मित्रियात्पात्वं हंसः।।[३]

जरायै त्वा परि ददामि जयायै नि धुवामि त्वा

जरा त्वा भद्रा नेष्ट व्यश्न्ये यन्तु मृत्यवो यानाहुरितरान्छ्वतम्।।[४]

अथर्ववेदस्य पञ्चमकाण्डे आयुर्वेददिशा बहूपयागित्वमस्ति। अस्मिन् काण्डस्य सूक्ते उक्तं यत्-हिमाच्छादिपर्वतशिखरेषु औषधयः उत्पन्नाः भवन्ति। तत एव रोगविनाशकौषथीनां प्राप्तिरभवत्। औषधिसेवनेन असाध्यरोगाणामपि चिकित्सा संभवति। यभोक्तं-

यो गिरीष्वजायथा वीरुधां फलमुत्तमम्।

कुष्ठेहि तक्मानं नाशयन्नितः।।[५]

कूटनाम्नि औषधिः प्राणपोषिका तथा च यक्ष्मारोगविनाशिका अस्ति। सा हिमालयस्य उत्तरदिशि उत्पन्नो भवति-

उदं जातो हिमवतः स प्राच्यां नीयसे जनम्।

तत्रकुष्ठस्य नामन्युत्तमानि वि भेजिरे।।[६]

सिलाचीनामकौषधिः देवसदृशः उपकारिका अस्ति। रक्ताश्वस्य सदृशः अस्याः वर्णो भवति-

अश्वस्यास्नः संपतिना सा वृक्षा अभि सिष्यदे।

सदा पतत्रिणी भूत्वा सा न एह्यरून्धति।।[७]

अस्यापरनाम स्मरणी अप्यस्ति। इयमौषधिः बेलरूपाऽस्ति, वृक्षेषु आरुह्य जिवति-

वृक्षं वृक्षमा रोहसि वृषण्यन्तीव कन्यला।

जयन्ती प्रत्यातिष्ठन्ती स्मरणी नाम वा असि।।[८]

सा वृष्टिकाले उत्पन्नाः भवति चन्द्रकिरणैः परिपुष्यते। एषा औषधिः व्रणनाशनं, सम्यकप्राणसंचारं करोति। अस्याः सेवनेन मनुष्याः दीर्घकालपर्यन्तं निरोगो जीवन्ति-

यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम्।

भत्री हि शश्वतामसि जनानो च न्यञ्चनी।।[९]

लाखकदम्बवृक्षात्, पाकडवृक्षात्, खैरवृक्षात् उत्पद्यमाना लाखनामकौषधिः दण्डबाणाहतजनानां व्रणपूर्णं करोति-

ISSN : 2454-2881

यद्दण्डेन यदिष्वा यद्वारुर्हरसा कृतम्।
तस्य त्वमसि निष्कृतिः सेमं निष्कृधि पूरुषम्।।[१०]

इयमौषधिः परमकान्तिमयी हिरण्यवर्णा भवति। वायुमाध्यमेन प्राणं धारयति। अस्यापरनाम मिष्कृतिरप्यस्ति–

हिरण्यवर्णे सुभगे सूर्यवर्णे वपुष्टमे।
रुत गच्छासि निष्कृते निष्कृतिर्नाम वा असि।।[११]

अथर्ववेदे तक्मज्वरस्य सामान्यवर्णनं प्राप्यते। 'तक्माः' इति तु ज्वरस्य एव नाम अस्ति। तक्मनाशनं मन्त्राः उपलभ्यन्ते। यथा–

यत्त्वं शीतोऽथो रूरः सह कासापेवयः।
भीमास्ते तक्मन्हेतयस्ताभिः स्म परि वृङ्धि नः।।[१२]

बलासः (क्षयादि) रोगः, गण्डमाला, यक्ष्या प्रभृतीनां रोगाणां दूरीकरणाय वरूणनामकस्य ओषधेः सेवनस्य उपयोगः प्राप्यते –

अस्थिस्त्रंसं परुस्त्रंसमास्थितं हृदयामयम्।
बलासं सर्वं नाशयाङ्गेष्ठा यश्च पर्वसु।।
निर्बलासं बलासिनः क्षिणोमि मुष्करं यथा।
छिनदम्यस्य बन्धनं मूलमुर्वार्वाइव।।
निर्बलासेनः प्र पताशुङ्गः शिशुको यथा।
अथो इटहव हायनोप द्राह्यवीरहा।।[१३]
अपचितः प्र पतत सुपर्णो वसतेरिव।
सूर्यः कृणोतु भेषजं चन्द्रमा वोऽपोच्छतु।।[१४]
वरणो वारयाता अयं देवो वनस्पतिः।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन्।।[१५]

कासः तथा दन्तपीडादिरोगाणां तथा तेषाम् औषधीनां वर्णनम् अतीव उत्तमरीत्या अथर्ववेदेऽस्ति-

यथा मनो मनस्केतैः परापतत्याशुमत्।
एवा त्वं कासे प्र पत पृथिव्या अनुसंवतम्।।[१६]

अस्मिन् वेदे वनस्पतिनामपि उल्लेखोऽस्ति। ओषधीषु पिप्पली, अपामार्गः, पृश्निपर्णी, रोहिणी, अश्वत्थः, अर्जुनः प्रमुखाः सन्ति।

अथर्ववेद अङ्गवर्णने शिरसो महत्वं सविशेषं वर्णितम्। ऋषिभिः चिकित्सा चतुष्प्रकारा कथिता। आथर्बणी, आङ्गिरसी, दैवी, मानुषीं च-

आथर्वणीरांगिरसीदैंवीर्मनुष्यजा उत।

ओषधयः प्रजायन्ते यदा त्वं प्राण जिन्वसि।।[१७]

मानुषी चिकित्सा ओषधीभिः संबद्धा। दैवी चिकित्सा वायुना, जलेन संबद्धा। आथर्वणी चिकित्सा जप-होम-दान-स्वस्ति-वाचनादिभिः संबद्धा। आङ्गिरसी चिकित्सा च मानसिकशक्त्या संबद्धा। ऋतावरिनामकौषधिः भवति यो जले एव उत्पद्यते, अस्य सेवनेन वाण्यां माधुर्यमायाति। मानसचिकित्सायाः वर्णनमुपलभ्यते। वरुणदेवता मानसचिकित्सकः आसीत्-

पृश्निं वरुणः दक्षिणां ददावान् पुनर्मघ त्वं मनसा चिकित्सीः।[१८]

रोगाणाम् अनेकानि कारणानि सन्ति, येषु अन्यतमं त्रिदोषोऽप्यस्ति। वातपित्रकफा हि दुष्टाः सन्तः त्रिदोषशब्देन व्यापदिश्यन्ते। आयुर्वेदे हि पित्तस्य अग्नेश्च एकरूपता स्वीकृता। रोगाणांलक्षणपूर्वकं तस्य निदानमपि कृतम्। यज्ञचिकित्सापि अत्र विशदीकृतम्।

रोगकारकाणां नानाविधानां कृमीनां वर्णनम् उपलभ्यते। नेत्र-नासिकादन्तेषु प्रवेशकत्रारः कृमीनां नाम तथा निःसरणस्योपायः वर्णितम् अस्ति-

इन्द्रस्य या मही दृषत्क्रिमेर्विश्वस्य तर्हणी।

तया पिनष्मि सं क्रिमीन्दृषदा खल्वा इव।।[१९]

सूर्यकिरणैस्तेषां विनाशः इत्यादीनाम् अनेकविषयाणां वर्णनमुपलभ्यन्ते।

रोगोत्पादककारणेषु विषस्यापि परिगणनं क्रियते। मन्त्रेण विषनाशस्यापि विशदविवेचनमुपलभ्यते अथर्ववेदे। विषस्य विषमौषधम् इत्यस्यापि सिद्धान्तस्य निदर्शनम् अथर्ववेदस्य मन्त्रे प्राप्यते-

अपेद्यरिरस्यरिर्वा असि।

विषे विषमपृक्था विषमिद्वा अपृक्थाः[२०]

आयुर्वेदस्य मूलभूतसिद्धान्तेषु त्रिदोषवाधस्य, धातुव्यापारस्य शरीररचनायाः, रोगाणां, कृमिचिकित्साविधीनाम्, अष्टाङ्गायुर्वदस्य च अस्मिन् वेदे उपलभ्यते। आयुर्वेदो हि भारतस्य प्राचीनतमं


ISSN : 2454-2881

चिकित्साविज्ञानम् अस्ति। आयुर्वेदीया ओषधयः सुलभा, अल्पमूल्या, निर्दोषा जनसाधारणप्रयोज्याश्च भवन्ति। आयुर्वेदचिकित्सया अन्यः कोऽपि विकारोऽथवा उपद्रवो नैव भवति। अद्य यदा विश्वस्य पर्यावरणं व्यापन्नं भवदिव लक्ष्यते, यदा च नवनुतना रोगा आविर्भवन्ति, तदा स्वस्थवृत्तस्य पालनं नितान्तमावश्यकतास्ति।

## सन्दर्भसूची -

१. ईशोपनिषद् - २
२. चरकसंहिता- १/४१
३. अथर्ववेदसंहिता- २/२८/१
४. अथर्ववेदसंहिता- ३/११/७
५. अथर्ववेदसंहिता- ५/१/४/१
६. अथर्ववेदसंहिता- ५/१/४/८
७. अथर्ववेदसंहिता- ५/१/५/९
८. अथर्ववेदसंहिता- ५/१/५/३
९. अथर्ववेदसंहिता- ५/१/५/२
१०. अथर्ववेदसंहिता- ५/१/५/४
११. अथर्ववेदसंहिता- ५/१/५/६
१२. अथर्ववेदसंहिता- ५/२२/१०
१३. अथर्ववेदसंहिता- ६/२४/१-३
१४. अथर्ववेदसंहिता- ६/८३/१
१५. अथर्ववेदसंहिता- ६/८५/१
१६. अथर्ववेदसंहिता- ६/१०५/१
१७. अथर्ववेदसंहिता- ११/४/१६
१८. अथर्ववेदसंहिता- ५/२/५/१
१९. अथर्ववेदसंहिता- २/३१/१
२०. अथर्ववेदसंहिता- ७/८८/१

**सहायकग्रन्थाः**

१. अथर्ववेदसंहिता, डा. धर्मेन्द्रकुमारः दिल्ली संस्कृत अकादमी, २०१३-१४
२. आयुर्वेद का परिचय एवं इतिहास, डा. विद्याधर शुक्लः, चौखाम्वा संस्कृत प्रतिष्ठान दिल्ली
३. चरकसंहिता, डा गोरख प्रसाद चतुर्वेदी, चौखम्वा भारती अकादमी, वाराणसी
४. अथर्ववेदसंहिता, शंकर पाण्डुरंग पंडित, कृष्णदास अकादमी वाराणसी १९८९
५. व्यवहारायुर्वेद और विषविद्यान, श्रीरामनाथ द्विवेदी, चौखम्वा अमर भारती प्रकाशनं, वाराणसी १९८७
६. The Atharvaveda and Gopatha-Brahmana,M. Bloomfield. 1899
७. आयुर्वेदपरिचय, राजकुमार जैन, अनेकान्त साहित्य शोध संस्थान, १९७८

- - - -



ISSN : 2454-2881

## शोधपत्रप्रकाशनार्थं दिङ्-निर्देशाः

- स्नीथिका (ISSN : 2454-2881) अन्ताराष्ट्रिय-बहुसांकायिक-बहुभाषिक-वार्षिक-शोधपत्रिका (पुनरीक्षिता) प्राचीनज्ञानपरम्परायाः कृते समर्पिताऽस्ति।
- अत्र भारतीय-इतिहास-समाज-संस्कृति-दर्शन-साहित्यादय विषयाः तथा च इतर-भारतीयसांस्कृतिकैतिह्यविषयाः सम्बद्धाः भविष्यन्ति।
- शोधपत्रिकायां मौलिक-तात्त्विक-बहुसांकायिक-तुलनात्मकशोधप्रविधियुक्तानि पत्राणि एव प्रकाशितानि भविष्यन्ति।
- पूर्णशोधपत्रं editorialboard.snithika@gmail.com इति अणुसंकेतं प्रति "MS word तथा च PDF" इति उभयरीत्या सज्जीकृत्य "प्रकाशनार्थं शोधपत्रम्" इति विषयं टङ्कणं कृत्वा प्रेषणीयम्।
- पुनरीक्षणार्थं हस्तलिखितपत्रं न स्वीक्रियते।
- शोधपत्राणि निर्धारितावधावेव प्रेषणीयानि।
- शोधपत्रेऽस्मिन् संस्कृतभाषायां १५०० शब्दाः, आङ्ग्लभाषायाञ्च २५०० शब्दाः अधिकतमरूपेण निर्धारिताः।
- शोधपत्रे सन्दर्भाः MLA अथवा APA रीत्या एव स्युः।

### पुनरीक्षण-विधि :

- मौलिकशोधपत्रमेव पुनरीक्षणार्थं सम्प्रेष्यते।
- शीर्षकानुगुणमेव प्रतिपाद्यविषयो भवितव्यः।
- संदर्भाः, पादटिप्पण्यः, अन्तटिप्पण्यश्च संहतिसाधिका भवेयुः।
- पुनरीक्षकाणां सूचनानुगुणं संशोधनस्यापेक्षा भवति चेत् पुनः संशोध्य सम्पादनसमित्यै प्रेषणीयं भविष्यति।
- कस्यापि शोधपत्रं उचिताधारभूमौ निरस्तीकरणाय सम्पादनसमितेः पूर्णाधिकारोऽस्ति।

